निरुपादानसम्भारमभित्तावेव चिन्नभः ।
पश्यत्यकृतमेवेमं जगत्स्वप्नं कृतं यथा ॥८॥(६।६२।४४)

[९] विश्वस्वप्नः :—

दीर्घस्वप्नमिदं विश्वं विद्ध्यहन्तादिसंयुतम् । (३।४२।८)
सर्गादावात्मभूर्भाति स्वप्नाभानुभवात्मकः ॥१॥ (३।४२।१६)
स्वप्ने नगरवास्तव्याः सत्या न स्युरिमे यदि ।
तदिहापि तदाकारे न सत्यं मे मनागपि ॥२॥(३।४२।१८)
एतदास्तामिदं तावद्यज्जाग्रदिव मन्यसे ।
विद्धि तत्स्वप्नमेवान्तर्देशकालाद्यपूरकम् ॥ ३ ॥ (३।४२।२३)
एवं सर्वमिदं भाति न सत्यं सत्यवत्स्थितम् ।
रञ्जयत्यपि मिथ्यैव स्वप्नस्त्रीसुरतोपमम् ॥४॥(३।४२।२४)

[१०] जीवं जीवं प्रति विश्वस्वप्नः :—

प्रत्येकमुदितो राम नूनं संसृतिखण्डकः ।
रात्रौ सैन्यनरस्वप्नजालवत्स्वात्मनि स्फुटः ॥१॥(४।१७।२७)
पृथक्प्रत्येकमुदितः प्रतिचित्तं जगद्भ्रमः । (३।४०।२९)
न किञ्चिदपि जानाति निजसंवेदनादृते ॥२॥(३।५५।६१)
यं प्रत्युदेति सर्गोऽयं स एवैनं हि चेतति ।
पदार्थः सन्निवेशं स्वमिव स्वप्नं पुमानिव ॥४॥ (६।१३।४)
रूपालोकमनस्कारैरन्ध्रैर्बहिरिव स्थितम् ।
सृष्टिं पश्यति जीवोऽन्तः सरसीमिव पर्वतः ॥५॥(६।२२।२७)

स्वसंज्ञानुभवे लीनास्तथा स्थावरजङ्गमाः । (३।५५।६२)
अन्यस्यान्यं न जानाति सीधुस्वादुमिव द्विजः ॥६॥(६।१६५।३१)
परमाणौ परमाणौ सर्गवर्गानिरर्गलम् ।
महाचितेः स्फुरन्त्यर्करुचीव त्रसरेणवः ॥७॥(३।२७।२१)
जगद्गुञ्जासहस्राणि यत्रासंख्यान्यणावणौ ।
अपरस्परलग्नानि काननं ब्रह्म नाम तत् ॥८॥( ४।१८।६ )

[१] सर्गादौ प्रजापतिकृतमद्यापि संस्थितं जगत् :—

सर्गादौ स्वप्नपुरुषन्यायेनादिप्रजापतिः ।
यथा स्फुटं प्रकचितस्तथाद्यापि स्थिता स्थितिः ॥१॥(३।५५।४७)
एवं भ्रान्तिमये विश्वे पदार्थाः संविदंशवः ।
सर्गादिषु यथैवासंस्तथैवाद्यपि संस्थिताः ॥२॥(३।५५।६७)
सङ्कल्पयति यन्नाम प्रथमोऽसौ प्रजापतिः ।
तत्तदेवाशु भवति तस्येदं कल्पनं जगत् ॥३॥(६।१८६।६५)
आदिसर्गे जगद्भ्रान्तिर्यथेयं स्थितिमागता ।
तथा तदाप्रभृत्येवं नियतिः प्रौढिमागता॥४॥(३।२१।४६)
तस्मिन्प्रथमतः सर्गे या यथा यत्र संविदः ।
कचितास्तास्तथा तत्र स्थिता अद्यापिनिश्चलाः ॥५॥(३।५४।१३)
सर्गादौ स्वयमेवान्तश्चिद्यथा कचितात्मनि ।
हिमाग्न्यादितयाऽद्यापि सा तथास्ते स्वसत्तया॥६॥(३।५४।१६)
यद्यथा कचितं यत्र व्योमरूप्यपि पार्थिवम् ।
सर्गादौ तस्य चलितुमद्ययावन्न युज्यते ॥७॥(३।५४।१८)

[१२] बाह्यार्थवादविज्ञानवादयोरैक्यम् :—

बाह्यार्थवादविज्ञानवादयोरैक्यमेव नः ।
वेदनात्मैकरूपत्वात्सर्वदा सदसंस्थितेः ॥ १ ॥ ( ६।३८।४ )

ब्रह्मपुर्यष्टकस्यादावर्थसंविद्यथोदिता ।
पुर्यष्टकस्य सर्वस्य तथैवोदेति सर्वदा ॥ २ ॥ ( ६।५१।२ )

प्रथमोऽसौ प्रतिस्पन्दः पदार्थानां हि विम्बकम् ।
प्रतिविम्बतमेतस्माद्यत्तदद्यापि संस्थितम् ॥ ३ ॥ (३।५५।४८)

महाचित्प्रतिभासत्वान्महानियतिनिश्चयात् ।
अन्योन्यमेव पश्यन्ति मिथः सम्प्रतिविम्बितात्॥४॥(३।५३।२५)

स्वसंज्ञानुभवे लीनास्तथा स्थावरजङ्गमाः ।
परस्परं यदा सर्वे स्वसंकेतपरायणाः ॥ ५ ॥ ( ३।५५।६२ )

कदाचित्प्रतिभैकैव वहूनामपि जायते ।
काकोलतालस्थितिवद्विचित्रा हि मनोगतिः ॥६॥ ( ५।४६।१० )

तथाहि वहवः स्वप्नमेकं पश्यन्ति मानवाः ।
स्वापभ्रमदमैरेयमदमन्थरचित्तवत् ॥ ७ ॥ ( ५।४६।११ )

यादृगेव विराडात्मन्येष विस्तार आगतः ।
तादृगेवेह सर्वस्मिन्नणुमात्रेऽपि भूतके ॥ ८ ॥ ( ६।२०।७ )

यथेन्दुत्वं स्वसंकल्पात्सर्वध्यातुः पृथक्पृथक् ।
भात्येवमेव वनितालाभः काल्पनिकः स्वतः ॥ ९ ॥( ६।२१०।८ )

अस्माकं त्वं स्वप्ननरस्तव स्वप्ननरा वयम् । ( ६।१५१।१० )
एवमेतदिदं सर्वमन्योन्यं स्वप्नवत्स्थितम् ॥१०॥(६।१५४।११)

संसारे विपुले स्वप्ने यथा सत्यमहं तव ।
तथा त्वमपि मे सत्यं सर्वं स्वप्नेष्विति क्रमः॥११॥ (३।४२।२०)

[१३] आत्मख्यातिवादः :-

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
इत्येताश्चिच्चमत्कृत्या आत्मख्यातेर्विभूतयः ॥ १ ॥ (६।१६६।९)



## ३—जगत्

### [१] जगन्नामानि :—

जगत्त्वमहमित्यादिर्मिथ्यात्मा दृश्यमुच्यते ।
यावदेतत्संभवति तावन्मोक्षो न विद्यते ॥ १ ॥ ( ३।१।२३ )
अविद्या संसृतिबन्धो माया मोहो महत्तमः ।
कल्पितानीति नामानि यस्याः सकलवेदिभिः ॥ २ ॥ (३।१।२०)

### [२] सङ्कल्पितस्यापि सङ्कल्पयितृत्वम्:—

स्वयं स्वभाव एवैष चिद्घनस्यास्य सुस्फुटम् ।
यद्यत्सङ्कल्पयत्याशु तत्र तेऽवयवा अपि ॥ १ ॥(६।२०८।२७)
चिदात्मकतया भान्ति नानात्मकतयात्मना ।
अप्येकसारास्तिष्ठन्ति नानाकारस्वभावगाः॥ २ ॥(६।२०८।२८)
प्रत्येकं किल तत्रास्ति ब्रह्म चिन्मात्रतात्मनि ।
सर्वात्मिका सा यत्रास्ते यथान्तर्भाति तत्तथा॥३॥(६।२०८।२९)
योयो नाम यथा ग्रीष्मे कल्पस्वेदाद्भवेत्कृमिः।
यद्यद्दृश्यं शुद्धचित्त्वं तज्जीवो भवति स्वतः ॥ ४ ॥(४।१९।३)

### [३] सर्गे सर्गे सर्गान्तराणि :—

सर्गे सर्गे पृथग्रूपं सन्ति सर्गान्तराण्यपि । (४।१८।१६)
तेष्वप्यन्तस्थसर्गौघाः कदलीदलपीठवत् ॥ १ ॥ (४।१८।१७)

जीवबीजं परं ब्रह्म सर्वत्र खमिव स्थितम् ।
तेन जीवोदरजगत्यपि जीवोऽस्त्यनेकधा ॥ २ ॥ (४।१६।१)

चिद्घनैकघनात्मत्वाज्जीवान्तर्जीवजातयः ।
कदलीदलवत्सन्ति कीटा इव धरोदरे ॥ ३ ॥ (४।१६।२)

त्रिजगच्चिदणावन्तरस्ति स्वप्नपुरं यथा ।
तस्याप्यन्तश्चिदणवस्तेष्वप्येकैकशो जगत् ॥ ४ ॥ (३।५२।२०)

आकाशे परमाण्वन्तर्द्रव्यादेरणुकेऽपि च । (३।४४।३४)
जीवाणुर्यत्र तत्रेदं जगद्वेत्ति निजं वपुः ॥ ५ ॥ (३।४४।३५)

अन्तरन्तस्तदन्तश्च स्वकोशेऽप्यणुकं प्रति ।
जातानि जायमानानि कदलीदलपीठवत् ॥ ६ ॥ (६।५६। ३)

परस्परमदृष्टानि नानुभूतानि वै मिथः ।
सैनिकस्वप्नजालानि जातानीव महान्त्यपि॥ ७ ॥ (६।५६।३४)

जगतोऽन्तरहंरूपमहंरूपान्तरे जगत् ।
स्थितमन्योन्यवलितं कदलीदलपीठवत् ॥ ८ ॥ (६।२२।२६)

जगन्ति सुबहून्येव सम्भवन्त्यणुकेऽपि च ।
कदलीपल्लवानीव सन्निवेशेन भूरिशः॥ ९ ॥ (३।५२।१९)

महारम्भगुरूण्येवमपि ब्रह्माण्डकानि हि ।
तुलया धानकामात्रमपि तानि भवन्ति नो ॥१०॥ (३।२७।२९)

परमाणुनिमेषाणां लक्षांशकलनास्वपि ।
जगत्कल्पसहस्राणि सत्यानीव विभान्त्यलम्॥११॥( ३।६२।१ )

तेष्वप्यन्तस्तथैवान्तः परमाणुकणं प्रति ।
भ्रान्तिरेवमनन्ताहो इयमित्यवभासते ॥१२॥( ३।६२।२ )

अणावणावसंख्यानि तेन सन्ति जगन्ति खे ।
तेषां तान्व्यवहारौघान्संख्यातुं क इव क्षमः ॥१३॥(६।१७६।६)

[४] परस्परमदृष्टानि सर्गजालानि :–

प्रत्येकमन्तरन्यानि तथैवाभ्युदितानि च ।
परस्परमदृष्टानि बहूनि विविधानि च ॥ १ ॥(६।६३।१२)
अन्योन्यं तानि सर्वाणि न पश्यन्त्येव किंचन ।
जडानीवैकराशीनि बीजानीव गलन्त्यपि ॥ २ ॥ (६।६३।१३)
स्वप्नरूपाणि सुप्तानां तुल्यकालं नृणामिव ।
महारम्भानुमृष्टानि शून्यानि च परस्परम् ॥ ३ ॥(६।५६।१६)
परस्परमदृष्टानि नानुभूतानि वै मिथः ।
सैनिकस्वप्नजालानि जातानीव महान्त्यपि ॥ ४ ॥(६।५६।३४)
संकल्पनगरं सत्यं यथा संकल्पितं प्रति ।
सदेहं वा विदेहं वा नेतरं प्रति किश्चन ॥ ५ ॥(३।२१।४५)

[५] सर्वस्य सर्वत्र सर्वदा संभवः :–

ब्रह्म सर्वगतं यस्माद्यथा यत्र यदोदितम् ।
भवत्याशु तथा तत्र स्वप्नशक्त्यैव पश्यति ॥ १ ॥(३।५२।४२)
सर्वत्र सर्वशक्तित्वाद्यत्र या शक्तिरुन्नयेत् ।
आस्ते तत्र तथा भाति तीव्रसंवेगहेतुतः ॥ २ ॥ (३।५२।४३)
सर्वत्र सर्वथा सर्वं सर्वदा सर्वरूपिणि । (६।१५६।४१)
सर्वं सर्वात्म सर्वत्र सर्वदास्ति तथा परे ॥ ३ ॥(६।१३।२८)

[६] जगद्वैचित्र्यम् :—

अनन्तानि जगन्त्यस्मिन्ब्रह्मतत्त्वमहाम्बरे ।
अम्भोधिवीचिजलवन्निमज्जन्त्युद्भवन्ति च ॥१॥ (४।४७।१४)

यथा तरङ्गा जलधौ मृगतृष्णा मरौ यथा ।
कुसुमानि यथा चूते तथा विश्वश्रियः परे ॥ २ ॥(४।४७।१५)

भूयोभूयो विवर्तन्ते सर्गेष्वप्स्विव वीचयः ।
अत्यन्तसदृशाः केचित्केचिदर्धसमक्रमाः ॥ ३ ॥ (६।६६।२३)
केचिदीषत्समाः केचिन्न कदाचित्पुनस्तथा । (६।६६।२४)
सर्वासां सृष्टिराशीनां चित्राकारविचेष्टिताः ॥ ४ ॥(४।४७।२७)

दैवमात्रैकसर्गाणि नरमात्रमयानि च ।
दैत्यवृन्दमयान्येव कृमिनिर्विवराणि च ॥ ५ ॥ (६।५६।३२)

कदाचित्सृष्टयः शार्व्यः कदाचित्पद्मजोद्भवाः ।
कदाचिदपि वैष्णव्यः कदाचिन्मनुनिर्मिताः॥ ६ ॥( ४।४७।८ )

भूरभून्मृन्मयी काचित्काचिदासीद्दृषन्मयी ।
आसीद्धेममयी काचित्काचित्ताम्रमयी तथा ॥७॥ (४।४७।१२)

यथा मशकजालानि वर्षादिष्वाकुलानि तु ।
उत्पत्योत्पत्य नश्यन्ति तथेमा लोकसृष्टयः॥ ८ ॥(४।४७।१७)

न च विज्ञायते कस्मात्कालात्प्रभृति चागताः।
नित्यागमापायपरा एताः सर्गपरम्पराः ॥९॥ (४।४७।१८)

अनादिमत्योऽविरतं प्रस्फुरन्ति तरङ्गवत् ।
पूर्वात्पूर्वं किलाभूवन्स्ततः पूर्वतरं यथा ॥ १० ॥ (४।४७।१९)

भूत्वा भूत्वा प्रलीयन्ते ससुरासुरमानवाः ।
सरित्तरङ्गभङ्ग्यैव समस्ता भूतजातयः ॥ ११ ॥ (४।४७।२०)

[७] सृष्टिलययोः पौनःपुन्यम् :–

जीवौघाश्चोद्भविष्यन्ति मधाविव नवाङ्कुराः ।
तत्रैव लयमेष्यन्ति ग्रीष्मे मधुरसा इव ॥ १ ॥ ( ३।६५।१० )
तिष्ठन्त्यजस्रं कालेषु त एवान्ये च भूरिशः ।
जायन्ते च प्रलीयन्ते परस्मिञ्जीवराशयः ॥ २ ॥(३।६५।११)
काश्चिज्जन्मसहस्रान्ते जातयश्चिरकालिकाः ।
काश्चित्कतिपयातीतजन्मरूपा व्यवस्थिताः ॥ ३ ॥ (३।६४।३१)
उत्पत्योत्पत्य कालेन भुक्त्वा देहपरम्पराम् ।
स्वत एव पदे यान्ति निलयं जीवराशयः ॥ ४ ॥ (४।४३।४४)

[८] कल्पान्ते सर्वसंक्षयः :–

पुत्र शेषमशेषेण दृश्यमाशु विनश्यति ।
यथा तथा स्वप्नपुरं सौषुप्तौ स्थितिमायुषः ॥ १ । (६/२।२१३।५)
निर्विशेषेण नश्यन्ति भुवः शैला दिशो दश ।
क्रिया कालः क्रमश्चैव न किञ्चिदविशिष्यते ॥२॥ (६/२।२१३।६)
नश्यन्ति सर्वभूतानि व्योमापि परिणश्यति ।
स सर्वजगदाभासमुपलब्धुरसंभवात् ॥ ३ ॥ (६/२।२१३।७)
ब्रह्मविष्णिवन्द्ररुद्राद्या ये हि कारणकारणम् ।
तेषामप्यतिकल्पान्ते नामापीह न विद्यते ॥४॥ (६/२।२१३।८)

यदिदं दृश्यते सर्वं जगत्स्थावरजङ्गमम् ।
तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ ५ ॥ ( ३।१।१० )
शाम्यतीदमशेषेण तथा सर्वत्र सर्वदा ।
यथा जाग्रद्विधौ स्वप्नः स्वप्ने वा जागरो यथा॥६॥( ६।२१३।१५)
यथा स्वप्नपुरं शान्तं न जाने क्वाशु गच्छति ।
शान्तं तथा जगद्दृश्यं न जाने क्वाशु गच्छति॥७॥(६।२१३।१६)

[९] ब्रह्मैव कल्पान्तेऽवशिष्यते :—

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥ १ ॥( ३।१।११ )
ब्रह्मास्ते शान्तमजरमनन्तात्मैव केवलम् । ( ३।२।३६ )
शून्यं नित्योदितं सूक्ष्मं निरुपाधि परं स्थितम् ॥२॥( ३।२।३७ )

[१०] जगदुत्पत्तिवर्णनम् :—

सुषुप्तं स्वप्नवद्भाति भाति ब्रह्मैव सर्गवत् ।
सर्वात्मकं च तत्स्थानं तत्र तावत्क्रमं शृणु ॥ १ ॥ ( ३।१२।२ )
तदात्मनि स्वयं किञ्चिच्चेत्यतामिव गच्छति ।
अगृहीतात्मकं संविदहंमर्शनपूर्वकम् ॥ २ ॥ ( ३।१२।४ )
भाविनामार्थकलनैः किञ्चिदूहितरूपकम् ।
आकाशादणु शुद्धं च सर्वस्मिन्भाति बोधनम्॥३॥ ( ३।१२।५ )
ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी ।
चिन्नामयोग्या भवति किंचिल्लभ्यतया तथा ॥ ४ ॥ ( ३।१२।६ )

घनसंवेदना पश्चाद्भाविजीवादिनामिका ।
सम्भवत्याचकलना यदोज्झति परं पदम् ॥ ५ ॥ ( ३।१२।७ )
सत्तैव भावनामात्रसारा संसरणोन्मुखी ।
तदा वस्तुस्वभावेन त्वनुत्तिष्ठति तामिमाम् ॥ ६ ॥ ( ३।१२।८ )
समनन्तरमेवास्याः खसत्तोदेति शून्यता ।
शब्दादिगुणबीजं सा भविष्यदभिधार्थदा ॥ ७ ॥ ( ३।१२।९ )
अहन्तोदेति तदनु सह वै कालसत्तया ।
भविष्यदभिधार्थेन वीजं मुख्यजगत्स्थितेः ॥ ८ ॥ (३।१२।१०)
एवंप्रायात्मिका संविद्बीजं सङ्कल्पशाखिनः ।
भवत्यहंकारकणस्ततः स्पन्दतया मरुत् ॥ ९ ॥ (३।१२।१२)
चिदहं तावती व्योमशब्दतन्मात्रभावनात् ।
खतो घनीभूय शनैः खतन्मात्रं भवत्यलम् ॥१०॥(३।१२।१३)
भाविनामार्थरूपं तद्बीजं शब्दौघशाखिनः ।
पदवाक्यप्रमाणाख्यं वेदवृन्दं विकासितम् ॥११॥ (३।११।१४)
तस्मादुदेष्यत्यखिला जगच्छ्रीः परमात्मनः ।
शब्दौघनिर्मितार्थौघपरिणामविसारिणः ॥ १२ ॥ (३।१२।१५)
चिदेवंपरिवारा सा जीवशब्देन कथ्यते ।
भाविशब्दार्थजालेन वीजं रूपौघशाखिनः ॥१३॥(३।१२।१६)
चतुर्दशविधं भूतजालमावलितान्तरम् ।
जगज्जठरगतौघं प्रसरिष्यति वै ततः ॥१४॥ ( ३।१२।१७ )
असम्प्राप्ताभिधाचारा चिज्जवात्मस्फुरद्वपुः ।
सा चैव स्पर्शतन्मात्रं भावनाद्भवति क्षणात् ॥१५॥ (३।१२।१८)

पवनस्कन्धविस्तारं वीजं स्पर्शौघशाखिनः ।
सर्वभूतक्रियास्पन्दस्तस्मात्सम्प्रसरिष्यति ॥१६॥ (३।१२।१९)
तत्रैव चिद्विलासेन प्रकाशोऽनुभवाद्भवेत् ।
तेजस्तन्मात्रकं तत्तु भविष्यदभिधार्थकम् ॥१७॥ (३।१२।२०)
तत्सूर्याग्निविजृम्भादिवीजमालोकशाखिनः ।
तस्माद्रूपविभेदेन संसारः प्रसरिष्यति ॥ १८ ॥ (३।१२।२१)
भावयन्स्तनुतामेव रसस्कन्ध इवाम्भसः ।
स्वदनं तस्य सङ्घस्य रसतन्मात्रमुच्यते ॥ १९ ॥ (३।१२।२२)
भाविवारिविलासात्मा तद्वीजं रसशाखिनः ।
अन्योन्यस्वदने तस्मात्संसारः प्रसरिष्यति ॥२०॥ (३।१२।२३)
भविष्यद्रूपसङ्कल्पनामासौ कल्पनात्मकः ।
सङ्कल्पात्मगुणैर्गन्धतन्मात्रत्वं प्रपश्यति ॥२१॥ (३।१२।२४)
भाविभूगोलकत्वेन वीजमाकृतिशाखिनः ।
सर्वाधारात्मनस्तस्मात्संसारः प्रसरिष्यति ॥२२॥ (३।१२।२५)
चिता विभाव्यमानानि तन्मात्राणि परस्परम् ।
स्वयं परिणतान्यन्तरम्बुनीव निरन्तरम् ॥ २३ ॥ (३।१२।२६)
तथैतानि विमिश्राणि विविक्तानि पुनर्यथा ।
न शुद्धान्युपलभ्यन्ते सर्वनाशान्तमेव हि ॥२४॥ (३।१२।२७)
संवित्तिमात्ररूपाणि स्थितानि गगनोदरे ।
भवन्ति वटजालानि यथा वीजकणान्तरे ॥२५॥ (३।१२।२८)
प्रसवं परिपश्यन्ति शतशाखं स्फुरन्ति च ।
परमाणवन्तरे भान्ति त्तणात्कल्पीभवन्ति च ॥२६॥(३।१२।२९)

विवर्तमेव धावन्ति निर्विवर्तानि सन्ति च ।
चिद्वेधितानि सर्वाणि क्षणात्पिण्डीभवन्ति च ॥२७॥(३।१२।३०)

[११] आकाशत्रयम् :—

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥१॥ (३।१७।१०)
देशदेशान्तरप्राप्तौ संविदो मध्यमेव यत् ।
निमेषेण चिदाकाशं तद्विद्धि वरवर्णिनि ॥ २ ॥ (३।१७।१२)
तच्चिदाकाशकोशात्म चिदाकाशैकभावनात् ।
अविद्यमानमप्याशु दृश्यतेऽथानुभूयते ॥ ३ ॥ (३।१७।११)
तस्मिन्निरस्तनिःशेषसङ्कल्पस्थितिमेषि चेत् ।
सर्वात्मकं पदं तत्त्वं त्वं तदाप्नोष्यसंशयम् ॥ ४ ॥ (३।१७।१३)
चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
विद्ध्येतत्त्रयमेकं त्वमविनाभावनावशात् ॥ ५ ॥ (३।४०।१६)

[१२] नियतिः :—

आदिसर्गे हि नियतिर्भाववैचित्र्यमक्षयम् ।
अनेनेत्थं सदा भाव्यमिति सम्पद्यते परम् ॥ १ ॥ (३।६२।१६)
अवश्यंभवितव्यैषा त्विदमित्थमिति स्थितिः ।
न शक्यते लङ्घयितुमपि रुद्रादिबुद्धिभिः ॥ २ ॥ (३।६२।२६)

सर्वज्ञोऽपि बहुज्ञोऽपि माधवोऽपि हरोऽपि च ।
अन्यथा नियतिं कर्तुं न शक्तः कश्चिदेव हि ॥३॥ (५।८९।२६)

पाषाणोदरलेखौघन्यायेनात्मनि तिष्ठता ।
ब्रह्मणा नियतिः सर्गो बुद्धोऽबोधवतेव खम् ॥४॥ (३।६२।१६)

सर्गादौ या यथा रूढा संवित्कचनसन्ततिः ।
साऽद्याप्यचलितान्येन स्थिता नियतिरुच्यते ॥ ५ ॥(३।५४।२२)

आमहारुद्रपर्यन्तमिदमित्थमिति स्थितेः ।
आतृणापञ्जजस्पन्दं नियमान्नियतिः स्मृता ॥ ६ ॥ (६/१।३७।२२)

## [१३] नियतेः काकतालीयवत्त्वम् :–

नियत्यनियती ब्रूहि कीदृशे स्वप्नसंविदि । (६/२।१४८।२०)
यावद्भानं किल स्वप्ने तावत्सैव नियन्त्रणा ॥१॥ (६/२।१४८।२१)

एवमस्या मुधाभ्रान्तेः का सत्ता कैव वासना ।
कावास्था काच नियतिः काऽवश्यंभावितोच्यताम्॥२॥(३।६०।७)

## [१४] नियतिपौरुषयोर्न विरोधः :—

पौरुषं न परित्याज्यमेतामाश्रित्य धीमता ।
पौरुषेणैव रूपेण नियतिर्हि नियामिका ॥ १ ॥ (३।६२।२७)

## [१५] नियतिरपि पौरुषेण जीयते :—

नियतिं यादृशीमेतत्सङ्कल्पयति सा तथा ।
नियतानियतान्कांश्चिदर्थाननियतानपि ॥ १ ॥ (५।२४।३१)

करोति चित्तं तेनैतच्चित्तं नियतियोजकम् ।
नियत्यां नियतिं कुर्वन्कदाचित्स्वार्थनामिकाम् ॥२॥(५।२४।३२)
जीवो हि पुरुषो जातः पौरुषेण स यद्यथा । (५।२४।३५)
सङ्कल्पयति लोकेऽस्मिन्स्तत्तथा तस्य नान्यथा॥३॥(५।२४।३६)



## ४—मनः

### [१] मनोरूपम् :—

सङ्कल्पनं मनो विद्धि सङ्कल्पात्तन्न भिद्यते ।
यथा द्रवत्वात्सलिलं तथा स्पन्दो यथानिलात् ॥१॥ (३।४।४३)

यत्र सङ्कल्पनं तत्र तन्मनोऽङ्ग तथा स्थितम् ।
सङ्कल्पमनसी भिन्ने न कदाचन केचन ॥ २ ॥ (३।४।४४)

यदर्थप्रतिभानं तन्मन इत्यभिधीयते । (३।४।४२)
परस्य पुंसः सङ्कल्पमयत्वं चित्तमुच्यते ॥ ३ ॥ (५।१३।८०)

अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्तिरचितं यद्रूपं तन्मनो विदुः ॥ ४ ॥ (३।९६।३)

सम्पन्ना कलनानाम्नी संकल्पानुविधायिनी ।
अवच्छेदवती वाग्रा हेयोपादेयधर्मिणी ॥ ५ ॥ (५।१३।५६)

तत्स्वयं स्वैरमेवाशु संकल्पयति नित्यशः ।
तेनेत्थमिन्द्रजालश्रीर्विततेयं वितन्यते ॥ ६ ॥ (३।१।१६)

चिन्निःस्पन्दो हि मलिनः कलङ्कविकलान्तरम् ।
मन इत्युच्यते राम न जडं न च चिन्मयम् ॥७॥ (३।९६।४१)

चितो यच्चेत्यकलनं तन्मनस्त्वमुदाहृतम् ।
चिद्भागोऽत्राजडो भागो जाड्यमत्र हि चेत्यता ॥८॥(३।९१।३७)

जडाजडदृशोर्मध्ये दोलारूपं स्वकल्पनम् ।
यश्चितो म्लानरूपिण्यास्तदेतन्मन उच्यते ॥ ९ ॥ (३।९६।४०)

जडाजडं मनो विद्धि संकल्पात्म बृहद्वपुः ।
अजडं ब्रह्मरूपत्वाज्जडं दृश्यात्मतावशात् ॥१०॥ (३।९१।३१

नाहं वेदावभासात्मा कुर्वाणोऽस्मीति निश्चयः ।
तस्मादेकान्तकलनस्तद्रूपं मनसो विदुः ॥ ११ ॥ (३।९६।५)

भावः सदसतोर्मध्ये नृणां चलति यश्चलः ।
कलनोन्मुखतां यातस्तद्रूपं मनसो विदुः ॥ १२ ॥ (३।९६।४)

मनो हि भावनामात्रं भावना स्पन्दधर्मिणी ।
क्रिया तद्भावितारूपं फलं सर्वोऽनुधावति ॥१३॥ (३।९६।१)

नहि दृश्यादृते किञ्चिन्मनसो रूपमस्ति हि ॥१४॥ (३।४।४८)

स्वमेवान्यतया दृष्ट्वा चितिर्दृश्यतया वपुः ।
निर्भागाप्येकभागाभं भ्रमतीव भ्रमातुरा ॥१५॥ (३।९१।४०)

शाश्वतेनैकरूपेण निश्चयेन विना स्थितिः ।
येन सा चित्तमित्युक्ता तस्माज्जातमिदं जगत् ॥१६॥ (३।९६।३९)

दृश्यानुभवसत्यात्म न सद्भावे विलासि तत् ।
कटकत्वं यथा हेम्नि तथा ब्रह्मणि संस्थितम्॥१७॥(३।९१।३२)

न वाह्ये नापि हृदये सद्रूपं विद्यते मनः ।
सर्वत्रैव स्थितं चैतद्विद्धि राम यथा नभः ॥ १८ ॥ (३।४।३९)

आतिवाहिकदेहात्मा मन इत्यभिधीयते ।
आधिभौतिकबुद्धिं तु स आधत्ते चिरस्थितेः॥ १९ ॥(३।४।४६)

## [२] मनोब्रह्मणोरभेदः :—

चेत्येन रहिता यैषा चित्तद्ब्रह्म सनातनम् ।

चेत्येन सहिता यैषा चित्सेयं कलनोच्यते ॥१॥ (५।१३।५३)
किञ्चिदामृष्टरूपं यद्ब्रह्म तच्च स्थिरं मनः ।
कल्पना सत्सदैवैतत्सदिवोपस्थिता हृदि ॥ २ ॥ (५।१३।५४)
यथा कटककेयूरैर्भेदो हेम्नो विलक्षणः ।
तथात्मनश्चितो रूपं भावयन्त्याःस्वमांशिकम् ॥३॥ (४।४२।१८)
यथा दीपेन दीपानां जातानामात्मनां तथा ।
देशकालकलामात्रभेदः स्वाभाविकश्चितेः ॥ ४ ॥ (४।४२।१९)
वातस्य वातस्पन्दस्य यथा भेदो न विद्यते ।
शून्यत्वखत्वोपमयोश्चिन्मात्राहंत्वयोस्तथा ॥ ५ ॥ (६।९६।१९)

[३] मनसो रूपाणि नामानि च :—

यथा गच्छति शैलूषो रूपाण्यलं तथैव हि ।
मनो नामान्यनेकानि धत्ते कर्मान्तरं व्रजत् ॥ १ ॥ (३।९६।४३)
चित्राधिकारवशतो विचित्रा विकृताभिधाः ।
यथा याति नरः कर्मवशाद्याति तथा मनः ॥२॥ (३।९६।४४)
यथैव पुरुषः स्नानदानादानादिकाः क्रियाः ।
कुर्वंस्तत्कर्तृवैचित्र्यमेति तद्वदिदं मनः ॥ ३ ॥ (३।९६।५५)
विचित्रकार्यवशतो नामभेदेन कर्तृता ।
मनः सम्प्रोच्यते जीववासनाकर्मनामभिः ॥ ४ ॥ (३।९६।५६)

( अ ) मनः :—

गतेव सकलङ्कत्वं कदाचित्कल्पनात्मकम् ।

उन्मेषरूपिणी नाना तदैव हि मनः स्थिता ।।५।। (३।९६।१७)

( आ ) बुद्धिः :—

भावनामनुसन्धानं यदा निश्चित्य संस्थिता ।
तदैषा प्रोच्यते बुद्धिरियत्ताग्रहणात्तमा ॥ ६ ॥ (३।९६।१८)

इदमित्थमिति स्पष्टबोधाद्बुद्धिरिहोच्यते । ( ६।१८८।५ )

( इ ) अहङ्कारः :—

अस्मीति प्रत्ययादन्तरहंकारश्च कथ्यते ॥ ७ ॥ (६।१८८।६)
यदा मिथ्याभिमानेन सत्तां कल्पयति स्वयम् ।
अहंकाराभिमानेन प्रोच्यते भवबन्धनी ॥ ८ ॥ (३।९६।१९)

( ई ) चित्तम् :—

इदं त्यक्त्वेदमायाति बालवत्पेलवा यदा ।
विचारं सम्परित्यज्य तदा सा चित्तमुच्यते ॥ ९ ॥ (३।९६।२०)

( उ ) कर्म :—

यदा स्पन्दैकधर्मत्वात्कर्तुर्या शून्यशंसिनी ।
आधावति स्पन्दफलं तदा कर्मेत्युदाहृता ॥ १० ॥ (३।९६।२१)

( ऊ ) कल्पना :—

काकतालीययोगेन त्यक्त्वैकघननिश्चयम् ।
यदेहितं कल्पयति भावं तेनेह कल्पना ॥ ११ ॥ (३।९६।२२)

( ए ) स्मृतिः :—

पूर्वदृष्टमदृष्टं वा प्राग्दृष्टमिति निश्चयैः ।
यदैवेहां विधत्तेऽन्तस्तदा स्मृतिरुदाहृता ॥ १२ ॥ (३।९६।२३)

( ऐ ) वासना :—

यदा पदार्थशक्तीनां संशुक्तानामिवाम्बरे ।
वसत्यस्तमितान्येहा वासनेति तदोच्यते ॥ १३ ॥ (३।९६।२४)
दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥१४॥ (५।९१।२९)

( ओ ) अविद्या :—

अस्त्यात्मतत्त्वं विमलं द्वितीया दृष्टिरङ्किता ।
जाता ह्यविद्यमानैव तदाविद्येति कथ्यते ॥१५॥ (३।९६।२५)
बोधादविद्यमानत्वादविद्येत्युच्यते बुधैः । (६।१८८।८)
अविद्यैवमनन्तेयं नानाप्रसवशालिनी ॥ १६ ॥ (६।१९०।१३)

(औ) मलम् :—

स्फुरत्यात्मविनाशाय विस्मारयति तत्पदम् ।
मिथ्या विकल्पजालेन तन्मलं परिकल्प्यते ॥१७॥ (३।९६।२६)

(अं) माया :—

सदसत्तां नयत्याशु सत्तां वा सत्वमञ्जसा ।

सत्तासत्ताविकल्पोऽयं तेन मायेति कथ्यते ॥१८॥ (३।९६।२९)

(अः) प्रकृतिः :—

सर्वस्य दृश्यजालस्य परमात्मन्यलक्षिते ।
प्रकृतत्वेन भावानां लोके प्रकृतिरुच्यते ॥ १९ ॥ (३।९६।२८)

(क) ब्रह्मेत्यादिः :—

स आतिवाहिको देहस्तदालोकप्रवर्तितः ।
कैश्चिद्ब्रह्मेति कथितः स्मृतः कैश्चिद्विराडिति॥२०॥(६।१८८।१७)
कश्चित्सनातनाभिख्यः कश्चिन्नारायणाभिधः ।
कश्चिदीश इति ख्यातः कश्चिदुक्तः प्रजापतिः॥२१॥(६।१८८।१८)

(ख) जीवः :—

जीवनाच्चेतनाज्जीवो जीव इत्येव कथ्यते । (६।१८८।४)
चेतनं राम संसारो जीव एषः पशुः स्मृतः ॥ २२ ॥ (३।७।७)

(ग) आतिवाहिकदेहः :—

एतत्कलनमाद्यन्तमनाकारमनामयम् ।
आतिवाहिकदेहोक्त्या समुदाहियते बुधैः ॥२३॥ (६।१८८।९)

(घ) इन्द्रियम् :—

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा विमृश्य च ।

इन्द्रमानन्दयत्येषा तेनेन्द्रियमिति स्मृतम् ॥२४॥ ( ३।९६।२७ )

(ङ) पुर्यष्टकम् :—

प्रौढसंकल्पजालात्स पुर्यष्टकमिति स्मृतम् । ( ६।१८८।७ )

(च) देहपदार्थौ :—

देहभावनया देहो घटभावनया घटः ॥ २५ ॥ ( ६।५०।१७ )

(छ) दर्शनान्तरैः सह मतभेदः :—

चितेश्चेत्यानुपातिन्या गतायाः सकलङ्कताम् ।
प्रस्फुरद्रूपधर्मिण्या एताः पर्यायवृत्तयः ॥२६॥ ( ३।९६।३१ )
अहंकारमनोबुद्धिदृष्टयः सृष्टिकल्पनाः ।
एकरूपतया प्रोक्ता या मया रघुनन्दन ॥ २७ ॥ (३।९६।४८)
नैयायिकैरितरथा तादृशैः परिकल्पिताः ।
अन्यथा कल्पिताः सांख्यैश्चार्वाकैरपि चान्यथा ॥२८॥(३।९६।४९)
जैमिनीयैश्चार्हतैश्च बौद्धैर्वैशेषिकैस्तथा ।
अन्यैरपि विचित्रैस्तैः पाञ्चरात्रादिभिस्तथा ॥२९॥(३।९६।५०)

[४] जीवस्याहङ्कारताऽऽदानम् :—

तदेव घनसंवित्त्या यात्यहन्तामनुक्रमात् ।
वह्नयणुः स्वेन्धनाधिक्यात्स्वां प्रकाशतामिव ॥१॥ (३।६४।१२)

जीवोऽहंकृतिमादत्ते संकल्पकलयेद्धया ।
स्वयैतया घनतया नीलिमानमिवाम्बरम् ॥ २ ॥ (३।६४।१४)
अहंभावो हि दिक्कालव्यवच्छेदी कृताकृतिः ।
स्वयं संकल्पवशतो वातस्पन्द इव स्फुरन् ॥ ३ ॥ (३।६४।१५)

[५] जीवस्य देहभावादानम् :—

जीवाकाशस्त्विमं देहं यथा वन्दति तच्छृणु ।
जीवाकाशः स्वयमेवासौ तस्मिंस्तु परमेश्वरे ॥१॥ (३।१३।१८)
अणुतेजःकणोऽस्मीति स्वयं चेतति चित्तया ।
यत्तदेवोच्छूनमिव भावयत्यात्मनाम्बरे ॥ २ ॥ (३।१३।१९)
असदेव सदाकारं सङ्कल्पेन्दुर्यथा न सन् ।
तमेव भावयन् द्रष्टृदृश्यरूपतया स्थितः ॥ ३ ॥ (३।१३।२०)
एकएव द्वितामेति स्वप्ने स्वमृतिबोधवत् ।
किञ्चित्स्थौल्यमिवादत्ते ततस्तारकतां विदन् ॥४॥ (३।१३।२१)
यथाभावितमत्रार्थभाविताद्विश्वरूपतः ।
स एव स्वात्मा सततोऽप्ययं सोऽहमिति स्वयम् ॥५॥(३।१३।२२)
चित्तात्प्रत्ययमाधत्ते स्वप्ने स्वामिव पान्थताम् ।
तारकाकारमाकारं भाविदेहाभिधं तथा ॥ ६ ॥ (३।१३।२३)
भावयत्येति तद्भावं चित्तं चेत्यार्थतामिव ।
परित्यज्यैव तद्बाह्यं ततस्तारककोटरे ॥ ७ ॥ (३।१३।२४)
स्वप्नसङ्कल्पयोः संविद्वेत्त्येतज्जीवकोऽणुके ।
स्वरूपतारकान्तस्थो जीवोऽयं चेतति स्वयम् ॥८॥ (३।१३।२६)

तदेतद्बुद्धिचित्तादिज्ञानसत्तादिरूपकम् ।
जीवाकाशः स्वतस्तत्र तारकाकाशकोशगम् ॥९॥ (३।१३।२७)
प्रेक्षेऽहमिति भावेन द्रष्टुं प्रसरतीव खे ।
ततो रन्ध्रद्वयेनैव भाविवाह्याभिधं पुनः ॥ १० ॥ (३।१३।२८)
येन पश्यति तन्नेत्रयुगं नाम्ना भविष्यति ।
येन स्पृशति सा वै त्वग्यच्छृणोति श्रुतिस्तु सा॥११॥(३।१३।२९)
येन जिघ्रति तद्घ्राणं स स्वमात्मनि पश्यति ।
तत्तस्य स्वदनं पश्चाद्रसना चोल्लसिष्यति ॥ १२ ॥ (३।१३।३०)
स्पन्दते यत्स तद्वायुश्चेष्टा कर्मेन्द्रियव्रजम् ।
रूपालोकमनस्कारजातमित्यपि भावयत् ॥१३॥ (३।१३।३१)
आतिवाहिकदेहात्मा तिष्ठत्यम्बरमम्बरे ॥ १४ ॥ (३।१३।३२)
मनोबुद्धिरहङ्कारस्तथा तन्मात्रपञ्चकम् ।
इति पुर्यष्टकं प्रोक्तं देहोऽसावातिवाहिकः ॥ १५ ॥ (६।५१।५०)
अहं किमिति शब्दार्थवेदनाभोगसंविदम् ।
संविदं तत्त्वशब्दार्थं जीवः पश्यति सार्थकम् ॥१६॥ (३।६७।४६)
तादृक्त्ववेदनात्सोऽथ रसशब्दार्थवेदनात् ।
भाविजिह्वार्थनाम्नैकदेशेऽनुभवति क्षणात्॥१७॥ (३।६७।४७)
तादृक्त्ववेदनात्तेजः शब्दार्थोन्मुखतां गतः ।
भविष्यन्नेत्रनाम्नैकदेशे भवति भासनम् ॥ १८ ॥ (३।६७।४८)
तादृक्त्ववेदनात्सोऽथ घ्राणं तद्दृष्टिवेदनात् ।
स्थितो यस्मिन्भवतीति तावद्दृम्म्यादिता स्थिता॥१९॥(३।६७।४९)
एवंप्रायः स जीवात्मा काकतालीयवच्छनैः ।

विशिष्टसन्निवेशत्वं भावितं पश्यति स्वतः ॥ २० ॥ (३।६७।५०)
स तस्य सन्निवेशस्य त्वसतोऽपि सतः सतः ।
शब्दभावैकदेशत्वं श्रवणार्थेन विन्दति ॥२१॥ (३।६७।५१)
स्पर्शभावैकदेशत्वं त्वक्शब्दार्थेन विन्दति ।
रसभावैकदेशत्वं रसनात्वेन विन्दति ॥ २२ ॥ (३।६७।५२)
रूपभावैकदेशत्वं नेत्रार्थाकृति पश्यति ।
गन्धभावैकदेशत्वं नासिकात्वेन पश्यति ॥ २३ ॥ (३।६७।५३)
एवं भावमयैः सत्ताप्रकटीकरणात्तमम् ।
भविष्यदिन्द्रियाख्यं स रन्ध्रं पश्यति देहके ॥२४॥(३।६७।५४)
इत्येवमादि जीवस्य राघवाद्यतनस्य च ।
उदेति प्रतिभासात्मा देह एवातिवाहिकः ॥२५॥ (३।६७।५५)
आतिवाहिकदेहात्मा चित्तदेहाम्बराकृतिः ।
स्वकल्पनान्त आकारमण्डं संस्थं प्रपश्यति ॥२६॥ (३।१३।३४)

[६] स्वसङ्कल्पकृतं वेष्टनम् :—

इच्छाद्याः शक्तयश्चेतो गावो वृषमिवोन्मदम् ।
अनुधावन्ति दोषाय सरितः सागरं यथा ॥ १ ॥ (४।४२।३०)
इति शक्तिमयंचेतो घनाहंकारतां गतम् ।
कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥२॥ (४।४२।३१)
स्वसङ्कल्पानुसन्धानात्पाशैरिव नयन्वपुः ।
कष्टमस्मिन्स्वयम्बन्धमेत्यात्मा परितप्यते ॥३॥ (४।४२।३२)

स्वसङ्कल्पिततन्मात्रज्वालाभ्यन्तरवर्ति च ।
परां विवशतामेति शृंखलाबद्धसिंहवत् ॥ ४ ॥ (४।४१।३४)
स्ववासनादशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ ५ ॥ (४।४३।३)

(७) संसृतिबीजविचारः—

अन्तर्लीनघनारम्भशुभाशुभमहाङ्कुरम् ।
संसृतिव्रततेर्बीजं शरीरं विद्धि राघव ॥ १ ॥ ( ५।६१।८ )
भावाभावदशाकोशं दुःखरत्नसमुद्गकम् ।
वीजमस्य शरीरस्य चित्तमाशावशानुगम् ॥ २ ॥ (५।६१।१०)
यदिदं किञ्चिदाभोगि जागतं दृश्यतां गतम् ।
रूपं तच्चेतसः स्फारं घटादित्वं मृदो यथा ॥ ३ ॥ (५।६१।१३)
द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ ४ ॥ (५।६१।१४)
द्वे वीजे राम चित्तस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥५॥ (५।६१।४८)
आमोदपुष्पवत्तैलतिलवच्चान्यवस्थिते ।
वासनावशतः प्राणस्पन्दस्तेन च वासना ॥ ६ ॥ (५।१६।५३)
चित्तोपशान्तिफलदं परमं साम्यकारणम् ।
सुभगं संविदः स्वास्थ्यं प्राणसंरोधनं विदुः ॥७॥ (५।६१।२७)
दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥८॥ (५।६१।२६)

भावितस्तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥ ९ ॥ (५।९१।३०)
तादृग्रूपः स पुरुषो वासनाविवशीकृतः ।
यत्पश्यति तदेतत्तत्सद्वस्त्विति विमुह्यति ॥१०॥ (५।९१।३१)
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥११॥ (५।९१।३२)
दृढाभ्यासपदार्थैकवासनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ १२ ॥ (५।९१।३५)
यदा न वास्यते किञ्चिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ १३ ॥(५।९१।३६)
वासनाप्राणपवनस्पन्दयोरनयोर्द्वयोः । (५।९१।६३)
संवेद्यं बीजमित्युक्तं स्फुरतस्तौ यतस्ततः ।
हृदि संवेद्यमाप्यैव प्राणस्पन्दोऽथ वासना ॥१४॥ (५।९१।६४)
संवेद्यसंपरित्यागात्प्राणस्पन्दनवासने । (५।९१।६५)
समूलं नश्यतः क्षिप्रं मूलच्छेदादिव द्रुमः ॥१५॥ (५।९१।६६)
पुरुषत्वं यथा स्थाणोः संवेद्यं संविदस्तथा । (५।९१।७१)
शुद्धैव संवित्त्रिजगत्संवेद्यं नान्यदस्त्यलम् ॥१६॥ (५।९१।७३)
यदा सङ्कल्प्य सङ्कल्प्य सम्वित्सम्विदते वपुः ।
तदास्य जन्मजालस्य सैव गच्छति बीजताम् ॥१७॥ (५।९१।८९)
अथास्याः सम्विदो राम सन्मात्रं बीजमुच्यते ।
सम्विन्मात्रादुदेत्येषा प्राकाश्यमिव तेजसः ॥१८॥ (५।९१।९८)
विशेषं सम्परित्यज्य सन्मात्रं यदलेपकम् ।

एकरूपं महारूपं सत्तायास्तत्पदं विदुः ॥१९॥ (५।९१।१०२)
सत्तासामान्यमात्रस्य या कोटिः कोविदेश्वर ।
सैवास्य वीजतां याता तत एव प्रवर्तते ॥२०॥ (५।९१।१०९)
सत्तासामान्यपर्यन्ते यत्तत्कलनयोज्झितम् ।
पदमाद्यमनाद्यन्तं तस्य वीजं न विद्यते ॥२१॥ (५।९१।११०)
तन्न किञ्चिच्च किञ्चिच्च तत्तदस्तीव नास्ति च ।
तत्तद्दृश्यमदृश्यं च तत्तदस्मि न चास्मि च ॥२२॥ (३।९१।१२०)

## [८] जीवानामसंख्येयत्वम् :—

एवं जीवाश्रितो भावा भवभावनयोहिताः ।
ब्रह्मणः कल्पिताकाराल्लक्षशोऽप्यथ कोटिशः ॥१॥ (४।४३।१)
असङ्ख्याताः पुरा जाता जायन्ते चापि वाद्य भोः ।
उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥२॥ (४।४३।२)
स्ववासनादशावेशादाशाविवशतां गताः ।
दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥३॥ (४।४३।३)
अनारतं प्रतिदिशं देशे देशे जले स्थले ।
जायन्ते वा म्रियन्ते वा बुद्बुदा इव वारिणि ॥४॥ (४।४३।४)

## [९] सप्तविधो जीवमोहः :—

वीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च ।( ३।११७।११ )
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तकम् ॥१॥(३।११७।१२)

(अ) बीजजाग्रत् :—

प्रथमे चेतनं यत्स्यादनाख्यं निर्मलं चितः । (३।११७।१३)
भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम् ।
बीजरूपं स्थितं जाग्रद्बीजजाग्रत्तदुच्यते ॥ २ ॥ (३।११७।१४)

(आ) जाग्रत् :—

नवप्रसूतस्य परादयं चाहममिदं मम । (३।११७।१५)
इति यः प्रत्ययः स्वस्थस्तज्जाग्रत्प्रागभावनात् ॥३॥(३।११७।१६)

(इ) महाजाग्रत् :—

अयं सोहमिदं तन्म इति जन्मान्तरोदितः । (३।११७।१६)
पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुरन् ॥४॥(३।११७।१७)

(ई) जाग्रत्स्वप्नः :—

अरूढमथ वा रूढं सर्वथा तन्मयात्मकम् । (३।११७।१७)
यज्जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ॥५॥(३।११७।१८)
द्विचन्द्रशुक्तिकारूप्यमृगतृष्णादिभेदतः । (३।११७।१८)
अभ्यासात्प्राप्य जाग्रत्त्वं स्वप्नोऽनेकविधो भवेत्॥६॥(३।११७।१९)

( उ ) स्वप्नः :—

अल्पकालं मया दृष्टमेवं नो सत्यमित्यपि । (३।११७।१९)
निद्राकालानुभूतेऽर्थे निद्रान्ते प्रत्ययो हि यः ।

स स्वप्नः कथितस्तस्य महाजाग्रत्स्थितेर्हृदि ॥७॥(३।११७।२०)

( ऊ ) स्वप्नजाग्रत् :—

चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः ।
स्वप्नो जाग्रत्तया रूढो महाजाग्रत्पदं गतः । (४।११७।२१)
अक्षते वा क्षते देहे स्वप्नजाग्रन्मतं हि तत् ॥८॥ (३।११७।२२)

( ए ) सुषुप्तिः :—

षडवस्थापरित्यागे जडा जीवस्य या स्थितिः । (३।११७।२२)
भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः ॥९॥(३।११७।२३)
एते तस्यामवस्थायां तृणलोष्टशिलादयः । (३।११७।२३)
पदार्थाः संस्थिताः सर्वे परमाणुपरमाणिनः ॥१०॥(३।११७।२४)

[ १० ] सप्तविधा जीवाः :—

ते स्वप्नजागराः केचित्केचित्संकल्पजागराः ।
केचित्केवलजाग्रत्स्थाश्चिराज्जाग्रत्स्थिताः परे ॥१॥(६।५०।२)
घनजाग्रत्स्थिताश्चान्ये जाग्रत्स्वप्नास्तथेतरे ।
क्षीणजागरकाः केचिज्जीवाः सप्तविधाः स्मृताः ॥२॥ (६।५०।३)

( अ ) स्वप्नजागराः :—

कस्मिंश्चित्प्राक्तने कल्पे कस्मिंश्चिज्जगति क्वचित् ।
केचित्सुप्ताः स्थिता देहैर्जीवा जीवितधर्मिणः ॥३॥ (६।५०।५)

ये स्वप्नमभिपश्यन्ति तेषां स्वप्नमिदं जगत् ।
विद्धि ते हि खलूच्यन्ते जीवकाः स्वप्नजागराः ॥४॥(६।५०।६)
क्वचिदेव प्रसुप्तानां यः स्वप्नः स्वयमुत्थितः ।
विषयः सोऽयमस्माकं तेषां स्वप्ननरा वयम् ॥५॥ (६।५०।७)
तेषां चिरतया स्वप्नः स जाग्रत्त्वमुपागतः ।
स्वप्नजागरकास्ते तु जीवास्ते तद्गताः स्थिताः ॥६॥ (६।५०।८)

( आ ) सङ्कल्पजागराः :—

कस्मिंश्चित्प्राक्तने कल्पे कस्मिंश्चिज्जगति क्वचित् ।
अनिद्रालव एवान्तः संकल्पैकपरा स्थिताः ॥७॥ (६।५०।१४)
ध्यानाद्विलुठिता वाथ मनोराज्यवशानुगाः ।
संकल्पदार्ढ्यमापन्ना गलिताग्रानुभूतयः ॥ ८ ॥ (६।५०।१५)
संकल्प एव जाग्रत्त्वं येषां चिरतयांशतः ।
तत्रास्तमितचेष्टानां ते हि संकल्पजागराः ॥ ९ ॥ (६।५०।१६)
संकल्पोपशमे भूयस्तमन्यं वा श्रयन्ति ते ।
देहे तेषां वयमिमे संकल्पपुरुषाः स्थिताः ॥१०॥ (६।५०।१७)

( इ ) केवलजागराः :—

प्राथम्येनावतीर्णास्ते ब्रह्मणो बृंहितात्मनः ।
प्रोक्ताः केवलजाग्रत्याः प्रागुत्पत्त्यविकासिनः ॥११॥ (६।५०।१९)

( ई ) चिरजागराः :—

भूयो जन्मान्तरगतास्त एव चिरजागराः ।

कथ्यन्ते प्रौढिमायाताः कार्यकारणचारिणः ॥१२॥(६।५०।२०)

( उ ) घनजागराः :—

त एव दुष्कृतावेशाज्जडस्थावरतां गताः ।
घनजाग्रत्तया प्रोक्ता जाग्रत्सु घनतां गताः ॥१३॥ (६।५०।२१)

( ऊ ) जाग्रत्स्वप्नाः :—

ये तु शास्त्रार्थसत्सङ्गबोधिता बोधमागताः ।
पश्यन्ति स्वप्नवज्जाग्रज्जाग्रत्स्वप्ना भवन्ति ते॥१४॥(६।५०।२२)

( ए ) क्षीणजागराः :—

ये तु संप्राप्तसम्बोधा विश्रान्ता परमे पदे ।
क्षीणजाग्रत्प्रभृतयस्ते तुर्यां भूमिकां गताः ॥१५॥ (६।५०।२३)

[ ११ ] जीवजातयः :—

( अ )इदंप्रथमता :—

इदंप्रथमतोत्पन्नो योऽस्मिन्नेव हि जन्मनि ।
इदंप्रथमतानाम्नी शुभाभ्याससमुद्भवा । (३।९४।२)
शुभालोकाश्रया सा च शुभकार्यानुबन्धिनी ॥१॥ (३।९४।३)

( अ ) गुणपीवरी :—

सा चेद्विचित्रसंसारवासनाव्यवहारिणी । (३।९४।३)

भवैः कतिपयैर्मोक्षमित्युक्ता गुणपीवरी ॥ २ ॥ (३।९४।४)

( इ ) ससत्वा :—

तादृक्फलप्रदानैककार्याकार्यानुमानदा । (३।९४।४)
तेन राम ससत्वेति प्रोच्यते सा कृतात्मभिः ॥३॥ (३।९४।५)

( ई ) अधमसत्वा :—

अथ चेच्चित्रसंसारवासनाव्यवहारिणी । (३।९४।५)
अत्यन्तकलुषा जन्मसहस्रैर्ज्ञानभागिनी ॥ ४ ॥ ( ३।९४।५)
तादृक्फलप्रदानैकधर्माधर्मानुमानदा । (३।९४।६)
असावधमसत्वेति तेन साधुभिरुच्यते ॥ ५ ॥ (३।९४।७)

( उ ) अत्यन्ततामसी :—

सैव संख्यातिगानन्तजन्मवृन्दादनन्तरम् । (३।९४।७)
संदिग्धमोक्षा यदि तत्प्रोच्यतेऽत्यन्ततामसी ॥६॥ (३।९४।८)

( ऊ ) राजसी :—

अनद्यतनजन्मा तु जातिस्तादृशकारिणी । (३।९.।८)
योत्पत्तिर्मध्यमा पुंसो राम द्वित्रिभवान्तरा । (३।९४।९)
तादृक्कार्या तु सा लोके राजसी राजसत्तम ॥७॥ (३।९४।९)

( ए ) राजससात्विकी :—

अविप्रकृष्टजन्मापि सोच्यते कृतबुद्धिभिः ।

सा हि तन्मृतिमात्रेण मोक्षयोग्या मुमुक्षुभिः । (३।९४।१०)
तादृक्कार्यानुमानेन प्रोक्ता राजससात्त्विकी ॥८॥ (३।९४।११)

( ऐ ) राजसराजसी :—

सैव चेदितरैरल्पैर्जन्मभिर्मोक्षभागिनी । (३।९४।११)
तत्तादृशी हि सा तज्ज्ञैः प्रोक्ता राजसराजसी ॥९॥ (३।९४।१२)

( ओ ) राजसतामसी :—

सैव जन्मशतैर्मोक्षभागिनी चेच्चिरैषिणी । (३।९४।१२)
त्वदुक्ता तादृगारम्भा सद्भी राजसतामसी ॥१०॥(३।९४।१३)

( औ ) राजसात्यन्ततामसी :—

सैव संदिग्धमोक्षा चेत्सहस्रैरपि जन्मनाम् । (३।९४।१३)
तदुक्ता तादृशारम्भा राजसात्यन्ततामसा ॥११॥ (३।९४।१४)

( अं ) तामसी :—

भुक्तजन्मसहस्रा तु योत्पत्तिर्ब्रह्मणो नृणाम् । (३।९४।१४)
चिरमोक्षा हि कथिता तामसी सा महर्षिभिः ॥१२॥(३।९४।१५)

( अः ) तामससत्वा :—

तज्जन्मनैव मोक्षस्य भागिनी चेत्तदुच्यते । (३।९४।१५)
तज्ज्ञैस्तामससत्वेति तादृशारम्भशालिनी ॥१३॥ ((३।९४।१६)

(क) तमोराजसी :—

भवैः कतिपयैर्मोक्षभागिनी चेत्तदुच्यते । (३।६४।१६)
तमोराजसरूपेति तादृशैर्गुणबृंहितैः ॥ १४ ॥ (३।६४।१७)

(ख) अत्यन्ततामसी :—

पूर्वजन्मसहस्राढ्या पुरोजन्मशतैरपि । (३।६४।१७)
मोक्षायोग्या ततः प्रोक्ता तज्ज्ञैस्तामसतामसी॥१५॥(३।६४।१८)
पूर्वं तु जन्मलक्षाढ्या जन्मलक्षैः पुरोपि चेत् । (३।६४।१८)
संदिग्धमोक्षा तदसौ प्रोच्यतेऽत्यन्ततामसी ॥१६॥(३।६४।१९)

[ १२ ] सर्वजीवानां ब्रह्मण उद्भव :—

सर्वा एताः समायान्ति ब्रह्मणो भूतजातयः । (३।६४।१९)
किञ्चित्प्रचलिता भोगात्पयोराशेरिवोर्मयः ॥ १ ॥ (२।६४।२०)
स्वतेजःस्पन्दिताभोगाद्दीपादिव मरीचयः ॥ २ ॥ (३।६४।२१)
स्वमरीचिवलोद्भूता ज्वलिताग्नेः कणा इव । (३।६४।२२)
मन्दारमञ्जरीरूपाश्चन्द्रबिम्बादिवांशवः ॥ ३ ॥ (३।६४।२३)
यथा विटपिनश्चित्रास्तद्रूपा विटपश्रियः । (३।६४।२४)
कटकाङ्गदकेयूरयुक्तयः कनकादिव ॥ ४ ॥ (३।६४।२५)
निर्झरादमलोद्योतात्पयसामिव बिन्दवः । (३।६४।२६)
आकाशस्य घटस्थालीरन्ध्राकाशादयो यथा ॥५॥(३।६४।२७)
सीकरावर्तलहरीबिन्दवः पयसो यथा । (३।६४।२८)
मृगतृष्णातरङ्गिण्यो यथा भास्करतेजसः ॥६॥ (३।६४।२९)
शीतरश्मेरिव ज्योत्स्ना स्वालोक इव तेजसः (३।६४।३०)

सर्वा एवोत्थिता राम ब्रह्मणो जीवराशयः ॥७॥ (३।६४।२५)

[ १३ ] उत्पत्तिलययोः सर्वत्रैकरूपता :—

यथा सम्पद्यते ब्रह्मा कीटः सम्पद्यते तथा । (३।६७।६९)
आब्रह्मकीटसंवित्तेः सम्यक्संवेदनात्त्वयः ॥१॥ (३।६७।६८)

[ १४ ] सर्वपदार्थानां समनस्कत्वम् :—

एतच्चित्तशरीरत्वं विद्धि सर्वगतोदयम् ।
यथा संवेदनेच्छत्वाद्यथा संवेदनोदयम् ॥ १ ॥(३।४०।२०)
वसति त्रसरेण्वन्तर्म्रियते गगनोदरे ।
लीयतेऽङ्कुरकोशेषु रसीभवति पल्लवे ॥ २ ॥ (३।४०।२१)
उल्लसत्यम्बुवीचित्वे प्रनृत्यति शिलोदरे ।
प्रवर्षत्यम्बुदो भूत्वा शिलीभूयावतिष्ठते ॥ ३ ॥ (३।४०।२२)
यथेच्छमम्बरे याति जठरेऽपि च भूभृताम् ।
अनन्तराकाशवपुर्धत्तेऽथ परमाणुताम् ॥ ४ ॥ (३।४०।२३)
यथा बीजेषु पुष्पादि मृदो राशौ घटो यथा ।
तथान्तः संस्थिता साधो स्थावरेषु स्ववासना ॥५॥ (६।१०।१९)
चिच्छक्तिर्वासनाबीजरूपिणी स्वापधर्मिणी ।
स्थिता रसतया नित्यं स्थावरादिषु वस्तुषु ॥६॥( ६।१०।२३)
बीजेषूल्लासरूपेण जाड्येन जडरूपिषु ।
द्रव्येषु द्रव्यभावेन काठिन्येनेतरेषु च ॥ ७ ॥ (६।१०।२४)
प्राणिवीर्यरसान्तस्था संविज्जङ्गमपाततम् ।
तनोति लतिकान्तस्थो रसः पुष्पफलं यथा ॥८॥ (६।२८।१८)

## ५—मनोमहत्त्वम् ।

### [ १ ] मनसः सर्वशक्तित्वम् :—

मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः । (३।९१।४)
स्वरूपं सर्वकृत्त्वं च शक्तत्वं मनसो मुने ॥ १ ॥ (३।९१।१६)
मनो यदनुसन्धत्ते तदेवाप्नोति तत्क्षणात् । (३।९२।१८)
यथैतद्भावयेत्स्वान्तं तथैव भवति क्षणात् ॥ २ ॥ (३।९१।५२)
प्रतिभासमुपायाति यद्यदस्य हि चेतसः ।
तत्तत्प्रकटतामेति स्थैर्यं सफलतामपि ॥ ३ ॥ (३।९१।१७)

### [ २ ] चित्तस्य संसृतिसामर्थ्यम् :—

विचित्रबुद्बुदोल्लासे स्वात्मनो व्यतिरेकिणि ।
यथा सुरायाः सामर्थ्यं तथा चित्तस्य संसृतौ ॥१॥ (३।६६।६)
जीवः संकल्पमात्रात्मा यत्संकल्पोऽवतिष्ठते ।
हृदि भूत्वा स एवाशु बहिः प्रसरति स्फुटम् ॥२॥ (६२।२२।३७)
तत्संकल्पात्मकं चेतो यथेदमखिलं जगत् ।
संकल्पयति संकल्पैस्तथैव भवति क्षणात् ॥३॥ (६२।११४।१७)
विश्वबीजमहंत्वं त्वं विद्धि तस्माद्धि जायते ।
साद्र्यब्ध्युर्वीनदीशादिजगज्जठरपादपः ॥ ४ ॥ (६२।७।११)
मनोविजृम्भणमिदं संसार इति संमतम् । (४।४७।४८)

चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ ॥५॥ (६।४४।१६)
चित्तमेव जगत्कर्तृ संकल्पयति यद्यथा ।
असत्सत्सदसच्चैव तत्तथा तस्य तिष्ठति ॥ ६ ॥ (६।१३६।१)
अङ्कुरस्य यथा पत्रलतापुष्पफलश्रियः ।
मनसोऽस्य तथा जाग्रत्स्वप्नविभ्रमभूमयः ॥७॥ (३।११०।४६)
कल्पं क्षणीकरोत्यन्तः क्षणं नयति कल्पताम् ।
मनस्तदायत्तमतो देशकालक्रमं विदुः ॥ ८ ॥ (३।१०३।१४)
मनोदृश्यमयं दोषं तनोतीमं क्षयात्मकम् ।
असदेव सदाकारं स्वप्नः स्वप्नान्तरं यथा ॥६॥ (३।४।७८)

[ ३ ] स्वयं स्वैरं च चित्तस्य जगत्कल्पनम् :—

तत्स्वयं स्वैरमेवाशु संकल्पयति देहकम् ।
तेनेयमिन्द्रजालश्रीर्विततेन वितन्यते ॥ १ ॥ (३।४।७६)

[ ४ ] सर्वेषामेव चित्तानामेवंरूपशक्तिमत्त्वम् :—

प्रत्येकमेव यच्चित्तं तदेवंरूपशक्तिकम् ।
पृथक्प्रत्येकमुदितः प्रतिचित्तं जगद्भ्रमः ॥ १ ॥(३।४०।२६)

[ ५ ] जीवस्य सर्वसम्पादनत्वशक्तिः :—

सर्वं सम्पादयत्याशु स्वयं जीवः स्वमीहितम् । (३।४५।१२)
प्रत्येकमस्ति चिच्छक्तिर्जीवशक्तिस्वरूपिणी ॥१॥ (३।४५।१३)
जीवस्योदेति या शक्तिर्यस्य यस्य यथा यथा ।

भाति तत्फलदा नित्यं तस्य तस्य तथा तथा ॥२॥(३।४५।१४)

यस्य यस्य यथोदेति स्वचित्प्रयतनं चिरम् ।
फलं ददाति कालेन तस्य तस्य तथा तथा ॥३॥ (३।४५।१८)

तपो वा देवता वापि भूत्वा स्वैव चिदन्यथा ।
फलं ददात्यथ स्वैरं नभःफलनिपातवत् ॥ ४ ॥ (३।४५।१९)

स्वसंविद्यतनादन्यन्न किञ्चिच्च कदाचन ।
फलं ददाति तेनाशु यथेच्छसि तथा कुरु ॥५॥ (३।४५।२०)

स्वया वासनया लोको यद्यत्कर्म करोति यः ।
स तथैव तदाप्नोति नेतरस्येह कर्तृता ॥ ६ ॥ (४।१३।११)

न तदस्ति जगत्कोशे शुभकर्मानुपातिना ।
यत्पौरुषेण शुद्धेन न समासाद्यते जनैः ॥ ७ ॥ (३।९२।८)

[ ६ ] मनःसंवेदनानुरूपं पदार्थानां वपुः :—

यच्चित्तं तन्मयो जन्तुर्भवतीत्यनुभूतयः ।
सदेहेषु विदेहेषु न भवत्यन्यथा क्वचित् ॥ १ ॥( ३।५६।२८)

यथा भावनमेतेषां पदार्थानां हि सत्यता । (३।५६।३०)

असत्यः सत्यतामेति पदार्थो भावनात्तथा ॥२॥ (३।५६।३१)

येन येन यथा यद्यद्यदा संवेद्यतेऽनघ ।
तेन तेन तथा तत्तत्तदा समनुभूयते ॥ ३ ॥ (३।६०।१६)

अमृतत्वं विषं याति सदैवामृतवेदनात् ।
शत्रुर्मित्रत्वमायाति मित्रसम्वित्तिवेदनात् ॥ ४ ॥ (३।६०।१७)

निमेषे यदि कल्पौघसंविदं परिविन्दति ।

निमेष एव तत्कल्पो भवत्यत्र न संशयः ॥ ५ ॥ (३।६०।२०)
कल्पे यदि निमेषत्वं वेत्ति कल्पोऽप्यसौ ततः ।
निमेषीभवति क्षिप्रं तादृग्रूपात्मिका हि चित् ॥६॥ (३।६०।२१)
दुःखितस्य निशा कल्पः सुखितस्यैव च क्षणः ।
क्षणः स्वप्ने भवेत्कल्पः कल्पश्च भवति क्षणः ॥७॥ (३।६०।२२)
ध्यानप्रक्षीणचित्तस्य न दिनानि न रात्रयः । (३।६०।२६)
न पदार्था नच जगत्सत्यमात्मनि योगिनः ॥८॥ (३।६०।२७)
मधुरं कटुतामेति कटुभावेन चिन्तितम् । (३।६०।२७)
कटु चायाति माधुर्यं मधुरत्वेन चिन्तितम् ॥ ९ ॥ (३।६०।२८)
मित्रबुद्ध्या द्विषन्मित्रं रिपुबुद्ध्या रिपुः सुहृत् । (३।६०।२८)
भवतीति महाबाहो यथासम्वेदनं जगत् ॥ १० ॥ (३।६०।२९)
वेदनात्पीतमानीलं शुक्लं वाप्यनुभूयते ।
आपद्द्रुत्सवः खेदं करोति परिमोहितः ॥ ११ ॥ (३।६०।३२)
शून्यमाकीर्णतामेति वेदनात्स्वप्नदृष्टिवत् । (३।६०।३१)
असद्यक्षो विमूढानां प्राणानप्यपकर्षति ॥ १२ ॥ (३।६०।३३)
वेदनात्स्वप्नवनिता जाग्रतीव रतिप्रदा ।
यद्यथा भासमायातं तत्तथा स्थिरतां गतम् ॥१३॥ ( ३।६०।३४)
यं यं निश्चयमादत्ते संविदन्तरखण्डितम् ।
तत्तथैवानुभवति प्रत्यक्षमिति सर्वगम् ॥ १४ ॥ (६।१००।३)
यं यं निश्चयमादत्ते संवित्स्वदृढनिश्चया ।
तथा तथा भवत्येषा फलयुक्तस्वभावतः ॥ १५ ॥ (६।१४८।५)
यथायमनुसंधत्ते स्वभावं सम्विदव्यया ।

तं तथैवानुभवति भवेच्चेद्दृढनिश्चयः ॥ १६ ॥ (६।२१०।७)
मनो मोहमुपादत्ते म्रियते जायते मनः ।
तत्त्वचिन्ताप्रसादेन बध्यते मुच्यते पुनः ॥ १७ ॥ (४।४।९)
ये सर्गा नरकाभोगा या जन्ममरणैषणा ।
स्वमनोमननेनेदं स निष्पन्दोऽपि दुःखदः ॥१८॥ (४।१३।१३)

## [ ७ ] भावनानुरूपं फलम् :—

दृढभावनया चेतो यद्यथा भावयत्यलम् । (४।२१।५६)
तत्तत्फलं तदाकारं तावत्कालं प्रपश्यति ॥ १ ॥ (४।२१।५७)
न तदस्ति न यत्सत्यं न तदस्ति न यन्मृषा । (४।२१।५७)
यद्यथा येन निर्णीतं तत्तथा तेन लक्ष्यते ॥ २ ॥ (४।२१।५८)
यादृशं भावमादत्ते दृढाभ्यासवशान्मनः ।
तथा स्पन्दाख्यकर्माख्यप्रथाशाखा विमुञ्चति ॥३॥(४।२१।२०)
तथा क्रियां तत्फलतां निष्पादयति चादरात् ।
ततस्तमेव चास्वादमनुभूयाशु बध्यते ॥ ४ ॥ (४।२१।२१)
यं यं भावमुपादत्ते तं तं वस्त्विति विन्दति ।
तत्तच्छ्रेयोऽन्यन्नास्तीति निश्चयोऽस्य च जायते॥५॥(४।२१।२२)
धर्मार्थकाममोक्षार्थं प्रयतन्ते सदैव हि ।
मनांसि दृढभिन्नानि प्रतिपत्त्या स्वयैव च ॥ ६ ॥ (४।२१।२३)
न निम्बेक्षू कटुस्वादू शीतोष्णौ नेन्दुपावकौ ।
यद्यथा परमाभ्यस्तमुपलब्धं तथैव तत् ॥ ७ ॥ (४।२१।३३)
दृढाभ्यासो य एवास्य जीवस्योदेत्यविघ्नतः ।

सोऽत्यन्तमरसेनापि तमेवाश्वनुधावति ॥ ८ ॥ (६।६३।२८)
मनो निर्मलसत्वात्म यद्भावयति यादृशम् ।
तत्तथाशु भवत्येव यथावर्तो भवेत्पयः ॥ ९ ॥ (४।१७।४)
जीवो यद्वासनाबद्धस्तदेवान्तः प्रपश्यति । (४।१७।२६)
भावनैव स्वमात्मानं देहोऽयमिति पश्यति ॥१०॥ (६।६३।३३)
यथावासनया जन्तोर्विषमप्यमृतायते ।
असत्यः सत्यतामेति पदार्थो भावनात्तथा ॥११॥ (३।५६।३१)
यद्यथा भावयत्याशु तत्तथा परिपश्यति । (६।५१।३)
इन्द्रियाणीन्द्रियार्थाख्यं विद्धि सम्वेदनं स्वकम् ॥१२॥(६।५१।४)

[ ८ ] अभ्यासप्रशंसा :—

पौनःपुन्येन करणमभ्यास इति कथ्यते ।
पुरुषार्थः स एवेह तेनास्ति न विना गतिः ॥१॥ (६।६७।४३)
योऽभ्यासः प्रकचत्यन्तः शुद्धचिन्नभसो रसात् ।
भवेत्तन्मयमेवान्तरावालमिव लक्ष्यते ॥ २ ॥ (६।६७।२०)
आतिवाहिकदेहोऽयं शुद्धचिद्व्योम केवलम् ।
आधिभौतिकतामेति भावनाभ्यासयोगतः ॥ ३ ॥ (६।६७।३०)
आधिभौतिकदेहोऽसौ धारणाभ्यासभावनात् ।
विहङ्गवत्खमभ्येति पश्याभ्यासविजृम्भितम् ॥४॥ (६।६७।३१)
दुःसाध्याः सिद्धिमायान्ति रिपवो यान्ति मित्रताम् ।
विषाण्यमृततां यान्ति संतताभ्यासयोगतः ॥५॥ (६।६७।३३)
येनाभ्यासः परित्यक्त इष्टे वस्तुनि सोऽधमः ।

कदाचिन्न तदाप्नोति वन्ध्या स्वतनयं यथा ॥६॥ (६/२।६७।३४)

सर्वस्य जन्तुजातस्य सर्ववस्त्ववभासने ।
सर्वदैवैक एवोच्चैर्जयत्यभ्यासभास्करः ॥ ७ ॥ (६/२।६७।४१)

दृढाभ्यासाभिधानेन यत्ननाम्ना स्वकर्मणा ।
निजवेदनजेनेव सिद्धिर्भवति नान्यथा ॥ ८ ॥ (६/२।६७।४४)

## [ ९ ] मनोनिश्चयप्राबल्यम् :—

न मनोनिश्चयकृतं कश्चिद्रोधयितुं क्षमः ॥ १ ॥ (३।८८।१८)

यो बद्धपदतां यातो जन्तोर्मनसि निश्चयः ।
स तेनैव विना ब्रह्मन्नान्येन विनिवार्यते ॥ २ ॥ (३।८८।१९)

बहुकालं यदभ्यस्तं मनसा दृढनिश्चयम् ।
शापेनापि न तस्यास्ति क्षयो नष्टेऽपि देहके ॥३॥ (३।८८।२०)

धीरं मनो भेदयितुं मनागपि न शक्यते ।
का नाम ता महाराज कीदृश्यः कस्य शक्तयः ॥४॥ (३।८९।३८)

याभिर्मनांसि भिद्यन्ते दृष्टनिश्चयवन्त्यपि ।
वृद्धिमायातु वा देहो यातु वा विशरारुताम् ॥५॥ (३।८९।३९)

भावितार्थाभिपतितं मनस्तिष्ठति पूर्ववत् ।
इष्टेऽर्थे चिरमाविष्टं दधानं तत्स्थितं मनः ॥ ६ ॥ (३।८९।४०)

भावाभावाः शरीरस्था नृप शक्ता न बाधितुम् ॥७॥ (३।८९।४१)

या यथा चित्प्रकचिता प्रतिपत्तिविदं विना ।
न सा ततः प्रचलति वेदनाभ्यासतः स्वयम् ॥८॥ (३।५४।१९)

[ १० ] चित्तानुरूपा गतिः :—

या यथैव प्रवृत्ता चित्सा तथैव प्रतिष्ठिता ॥१॥ ( ३।४०।११ )
यथा संवित्तथा चित्तं सा तथावस्थितिं गता ।
परमेण प्रयत्नेन नीयतेऽन्यदशां पुनः ॥ २ ॥ ( ३।४०।१३ )
सर्पैकप्रत्ययो रज्ज्वामसर्पप्रत्यये वलात् ।
निवर्ततेऽन्यथा त्वेष तिष्ठत्येव यथास्थितः ॥३॥ ( ३।४०।१४ )
अन्यत्ववेदनादन्य परस्मादातिवाहिकः ।
ब्रह्मत्ववेदनाद्ब्रह्म सा संवित्तिर्हि नान्यजा ॥४॥ (३।६७।५८)
यावद्वेतालसंकल्पो वालस्य किल विद्यते ।
निर्वेतालधियस्तावदुदयस्तस्य कः कथम् ॥५॥ ( ३।५३।३१ )
अविवेकज्वरोष्णत्वं विद्यते यावदात्मनि ।
तावद्विवेकशीतांशुशैत्यं कुत उदेत्यलम् ॥६॥ ( ३।५३।३२ )

[ ११ ] चित्तायत्ते सुखदुःखे :—

चित्तायत्तमिदं सर्वं जगत्स्थिरचरात्मकम् ।
चित्ताधीनवतो राम बन्धमोक्षावपि स्फुटम् ॥१॥ ( ३।९८।३ )
मनः प्रमादाद्वर्धन्ते दुःखानि गिरिकूटवत् ।
तद्वशादेव नश्यन्ति सूर्यस्याग्रे हिमं यथा ॥२॥ (३।९९।४३)
सर्वेषु सुखदुःखेषु सर्वासु कलनासु च ।
मनः कर्तृ मनो भोक्तृ मानसं विद्धि मानवम्॥३॥ (३।११५।२४)
मनः कर्मफलं भुङ्क्ते शुभं वाऽशुभमेव वा । (३।११५।२६)

अतश्चित्तं नरं विद्धि भोक्तारं सुखदुःखयोः ॥४॥ (३।११५।३४)

मनो मोहमुपादत्ते म्रियते जायते मनः ।
तत्स्वचिन्ताप्रसादेन बध्यते मुच्यते पुनः ॥ ५ ॥ ( ४।४।६ )

सर्वेषामेव देहानां सुखदुःखार्थभाजनम् ।
शरीरं मन एवेह नतु मांसमयं मुने ॥ ६ ॥ ( ४।१३।८ )

यस्त्वकृत्रिम आनन्दस्तदर्थं प्रयतैर्नरैः ।
मनस्तन्मयतां नेयं येनासौ समवाप्यते ॥ ७ ॥ ( ४।२१।३४ )

[ १२ ] जीवेच्छाकल्पितं निजं विश्वम् :—

इदं चित्तेच्छयोदेति लीयते तदनिच्छया । ( ४।४५।३३ )
दीर्घस्वप्नं तथैवेदं विद्धि चित्तोपपादितम् ॥१॥ ( ४।४५।२४ )

या येन वासना यत्र सतेवारोपिता यथा ।
सा तेन फलसूस्तत्र तदेव प्राप्यते तथा ॥२॥ ( ३।६६।१० )

स्वेनैव चित्तरूपेण कर्मणा फलधर्मिणा ।
सङ्कल्पैकशरीरेण नानाविस्तरशालिना ॥ ३ ॥ ( ३।६६।८ )

इदं ततमनेकात्म मायामयमकारणम् ।
विश्वं विगतविन्यासं वासनाकल्पनाकुलम् ॥४॥ ( ३।६६।६ )

[ १३ ] मनसो देहस्य कर्तृत्वम् :—

मनसेदं शरीरं हि वासनार्थं प्रकल्पितम् ।
कृमिकोशप्रकारेण स्वात्मकोश इव स्वयम् ॥१॥ ( ४।४५।७ )
करोति देहं सङ्कल्पात्कुम्भकारो घटं यथा ॥२॥ ( ४।११।१६ )

योऽयं मांसास्थिसङ्घातो दृश्यते पाञ्चभौतिकः ।
मनोविकल्पनं विद्धि न देहः परमार्थतः ॥ ३ ॥ ( ४।१३।६ )
चित्तं हि प्रतिभासात्म यच्च तत्प्रतिभासनम् ।
तदिदं भाति देहादिस्वान्तं नान्यास्ति देहदृक् ॥४॥ (३।६१।२०)
स्वप्नसङ्कल्पजालेन यथान्यैव जगत्स्थितिः ।
तथैवेयं हि सङ्कल्पकलना काचिदेव हि ॥ ५ ॥ (६१।२८।३०)
प्राक्प्रवाहचिराभ्यस्तो वासनातिशयेन यः ।
तथैव दृश्यते देहस्तथाऽऽकृत्युदयेन सः ॥ ६ ॥ (६१।२८।३४)
मनसा भाव्यमानो हि देहतां याति देहकः ।
देहभावनयाऽयुक्तो देहधर्मैर्न बाध्यते ॥ ७ ॥ ( ३।८६।३ )
यन्मयं हि मनो राम देहस्तदनु तद्वशः ।
तत्तामायाति गन्धान्तः पवनो गन्धतामिव ॥८॥ (४।२१।१६)

## [ १४ ] रोगाणां मानसी चिकित्सा :—

### ( अ ) आधिव्याधिस्वरूपम् :—

आधयो व्याधयश्चैव द्वयं दुःखस्य कारणम् ।
तन्निवृत्तिः सुखं विद्यात्तत्क्षयो मोक्ष उच्यते ॥१॥ (६१।८१।१२)
देहदुःखं विदुर्व्याधिमाध्याख्यं वासनामयम् ।
मौर्ख्यमूले हि ते विद्यात्तत्त्वज्ञाने परिक्षयः ॥ २ ॥ (६१।८१।१४)
इदं प्राप्तमिदं नेति जाड्याद्वा घनमोहदाः ।
आधयः सम्प्रवर्तन्ते वर्षासु मिहिका इव ॥ ३ ॥ ( ६१।८१।१६)

भृशं स्फुरन्तीष्विच्छासु मौर्ख्ये चेतस्यनिर्जिते ।
दुरन्नाभ्यवहारेण दुर्देशाक्रमणेन च ॥ ४ ॥ (६।८१।१७)
दुष्कालव्यवहारेण दुष्क्रियास्फुरणेन च ।
दुर्जनासङ्गदोषेन दुर्भावोद्भावनेन च ॥ ५ ॥ ( ६।८१।१८ )
क्षीणत्वाद्वा प्रपूर्णत्वान्नाडीनां रन्ध्रसन्ततौ ।
प्राणे विधुरतां याते काये तु विकलीकृते ॥ ६ ॥ (६.८१।१९)
दौस्स्थित्यकारणं दोषाद्व्याधिर्देहे प्रवर्तते ॥ ७ ॥ (६८१।२०)

( आ ) व्याधेः कारणमाधिः :—

चित्ते विधुरिते देहः संक्षोभमनुयात्यलम् । ( ६।८१।३० )
संक्षोभात्साम्यमुत्सृज्य वहन्ति प्राणवायवः ॥८॥ (६।८१।३२)
असमं वहति प्राणे नाड्यो यान्ति विसंस्थितिम् । (६।८१।३३)
काश्चिन्नाड्यः प्रपूर्णत्वं यान्ति काश्चिच्च रिक्तताम्॥९॥(६।८१।३४)
कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेव वा ।
दोषायैव प्रयात्यन्नं प्राणसञ्चारदुष्क्रमात् ॥१०॥ (६।८१।३५)
तथान्नानि नयत्यन्तः प्राणवातः स्वमाश्रयम् । ( ६।८१।३६ )
यान्यन्नानि निरोधेन तिष्ठन्त्यन्तः शरीरके ॥११॥ (६।८१।३७)
तान्येव व्याधितां यान्ति परिणामस्वभावतः । (६।८१।३७)
एवमाधेर्भवेद्व्याधिस्तस्याभावाच्च नश्यति॥ १२ ॥ (६।८१।३८)

( इ ) आधिक्षयेण व्याधयोऽपि क्षीयन्तेः—

आधिक्षयेणाधिभवाः क्षीयन्ते व्याधयोऽप्यलम् । (६।८१।२४)

शुद्धया पुण्यया साधो क्रियया साधुसेवया ॥१३॥ (६/१।८१।४०)
मनः प्रयाति नैर्मल्यं निकषेणेव काञ्चनम् । (६/१।८१।४०)
आनन्दो वर्धते देहे शुद्धे चेतसि राघव ॥१४॥ (६/१।८१।४१)
सत्वशुद्ध्या वहन्त्येते क्रमेण प्राणवायवः ।
जरयन्ति तथान्नानि व्याधिस्तेन विनश्यति ॥१५॥ (६/१।८१।४२)
यन्मयं हि मनो राम देहस्तदनु तद्वशः ।
तत्तामायाति गन्धान्तः पवनो गंधतामिव ॥१६॥ (४।२१।१६)

## ( ई ) मंत्राचिकित्सा :—

यथा विरेकं कुर्वन्ति हरीतक्यः स्वभावतः ।
भावनावशतः कार्यं तथा यरलवादयः ॥१७॥ (६/१।८१।३९)

## ( उ ) साराधिक्षयः :—

द्विविधो व्याधिरस्तीह सामान्यः सार एव च ।
व्यवहारस्तु सामान्यः सारो जन्ममयः स्मृतः॥१८॥ (६/१।८१।२३)
प्राप्तेनाभिमतेनैव नश्यन्ति व्यावहारिकाः । (६/१।८१।२४)
आत्मज्ञानं विना सारो नाधिर्नश्यति राघव ॥१९॥ (६/१।८१।२५)
आधिव्याधिविलासानां राम साराधिसंक्षयः ।
सर्वेषां मूलहा प्रावृणनदीव तटवीरुधाम् ॥२०॥ (६/१।८१।२६)

## ( ऊ ) कथमनामयं जीवितं स्यात् :—

मनसा भाव्यमानो हि देहतां याति देहकः ।

देहभावनयाऽयुक्तो देहधर्मैर्न बाध्यते ॥ २१ ॥ (३।८९।३)

न मनोनिश्चयकृतं कश्चिद्बोधयितुं क्षमः ॥२२॥ (३।८८।१८)

यन्मनोनिश्चयकृतं तद्द्रव्यौषधिदण्डनैः । (३।९१।४)

हन्तुं न शक्यते जन्तोः प्रतिबिम्बमणेरिव ॥२३॥ (३।९१।५)

पौरुषं स्वमवष्टभ्य धैर्यमालम्ब्य शाश्वतम् ।

यदि तिष्ठत्यगम्योऽसौ दुःखानां तदनिन्दितः ॥२४॥ (३।९२।१४)

पौरुषेण मनः कृत्वा नीरागं विगतज्वरम् ।

माण्डव्येन जिताः क्लेशाः शूलप्रान्तेऽपि तिष्ठता॥२५॥(३।९२।२१)

अन्येऽपि सावधाना ये धीराः सुरमहर्षयः ।

चित्तास्त्रमनुसन्धानं न त्यजन्ति मनागपि ॥२६॥ (३।९२।२४)

आधयो व्याधयश्चैव शापाः पापदृशस्तथा ।

न खण्डयन्ति तच्चित्तं पद्माघाताः शिलामिव ॥२७॥ (३।९२।२५)

भावाभावमयीं चिन्तामीहितानीहितान्विताम् ।

विमृश्यात्मनि तिष्ठामि चिरं जीवाम्यनामयः॥२८॥ (६१।२६।१०)

इदमद्य मया लब्धमिदं प्राप्स्यामि सुन्दरम् ।

इति चिन्ता न मे तेन चिरं जीवाम्यनामयः ॥२९॥ (६१।२६।१२)

प्रशान्तचापलं वीतशोकं स्वस्थं समाहितम् ।

मनो मम मुने शान्तं तेन जीवाम्यनामयः ॥३०॥ (६१।२६।१६)

किमद्य मम सम्पन्नं प्रातर्वा भविता पुनः ।

इति चिन्ताज्वरो नास्ति तेन जीवाम्यनामयः॥३१॥ (६१।२६।१८)

जरामरणदुःखेषु राज्यलाभसुखेषु च ।

न बिभेमि न हृष्यामि तेन जीवाम्यनामयः ॥३२॥ (६।२६।१९)
अयं बन्धुः परश्चायं ममायमयमन्यतः ।
इति ब्रह्मन्न जानामि तेन जीवाम्यनामयः ॥३३॥ (६।२६।२०)
आहरन्विहरन्तिष्ठन्नुत्तिष्ठन्नुच्छ्वसन्स्वपन् ।
देहोऽहमिति नो वेद्मि तेनास्मि चिरजीवितः ॥३४॥ (६।२६।२२)
अपरिचलया शक्त्या सुदृशा स्निग्धमुग्धया ।
ऋजु पश्यामि सर्वत्र तेन जीवाम्यनामयः ॥३५॥ (६।२६।२५)
यत्करोमि यदश्नामि तत्त्यक्त्वा तद्गतोऽपि मे ।
मनो नैष्कर्म्यमादत्ते तेन जीवाम्यनामयः ॥३६॥ (६।२६।२७)
करोमीशोऽपि नाक्रान्तिं परितापे न खेदवान् ।
दरिद्रोऽपि न वाञ्छामि तेन जीवाम्यनामयः ॥३७॥ (६।२६।२९)
जीर्णं भिन्नं श्लथं क्षीणं क्षुब्धं क्षुण्णं क्षयं गतम् ।
पश्यामि नववत्सर्वं तेन जीवाम्यनामयः ॥३८॥ (६।२६।३३)
सुखितोऽस्मि सुखापन्ने दुःखितो दुःखिते जने ।
सर्वस्य प्रियमित्रं च तेन जीवाम्यनामयः ॥३९॥ (६।२६।३४)
आपद्यचलधीरोऽस्मि जगन्मित्रं च सम्पदि ।
भावाभावेषु नैवास्मि तेन जीवाम्यनामयः ॥४०॥ (६।२६।३५)

[१५] चित्ते संस्कृते सति जीवनमानन्दमयं भवति :-

मनः सर्वमिदं राम तस्मिन्नन्तश्चिकित्सिते ।
चिकित्सितो वै सकलो जगज्जालमयो भवेत् ॥१॥ (४।४।५)

अन्तःशीतलतायां तु लब्धायां शीतलं जगत् । (५।५६।३३)
अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ॥२॥ (५।५६।३४)
न तत्त्रिभुवनैश्वर्यान्न कोशाद्रत्नधारिणः ।
फलमासाद्यते चित्तायन्महत्त्वोपबृंहितात् ॥३॥ (५।२१।१२)
पूर्णे मनसि सम्पूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥४॥ (५।२१।१४)

[१६] शुद्धे चित्ते आत्मा प्रतिबिम्बति :—

सर्वत्र स्थितमाकाशमादर्शे प्रतिबिम्बति ।
यथा तथात्मा सर्वत्र स्थितश्चेतसि दृश्यते ॥ १ ॥ (५।७१।३९)
आकाशोपलकुड्यादौ सर्वत्रात्मदशा स्थिता ।
प्रतिबिम्बमिवादर्शे चित्त एवात्र दृश्यते ॥ २ ॥ (५।७१।३६)
चित्तं वृत्तिविहीनं ते यदा यातमचित्तताम् ।
तदा मोक्षमयीमन्तः सत्तामाप्नोषि तां तताम् ॥ ३ ॥(५।२१।२६)

[१७] मूढमनो यावत्संसारतिमिरम् :—

जडधर्मि मनो यावद्गर्तकच्छपवत्स्थितम् ।
भोगमार्गवदामूढं विस्मृतात्मविचारणम् ॥ १ ॥ (५।५।२७)
तावत्संसारतिमिरं सेन्दुनापि सवह्निना ।
अर्कद्वादशकेनापि मनागपि न भिद्यते ॥ २ ॥ (५।५।२८)

[ १८ ] चित्तं जगन्नाभिः :—

अस्य संसाररूपस्य मायाचक्रस्य राघव ।
चित्तं विद्धि महानाभिं भ्रमतो भ्रमदायिनः ॥१॥ (५।५०।६)
तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
गृहीतनाभिवहनान्मायाचक्रं निरुध्यते ॥ २ ॥ (५।५०।७)



## ६—सिद्धयः ।

### १—मनोयोगजाः सिद्धयः :—

मनो निर्मलसत्त्वात्म यद्भावयति यादृशम् ।
तत्तथाशु भवत्येव यथावर्तो भवेत्पयः ॥ १ ॥ (४।१७।४)

### (अ) परेषां चित्तस्य ज्ञानम् :—

मलिनं हि मनोऽन्वीर्यं न मिथः श्लेपमर्हति ।
अयोऽयसि च संतप्ते शुद्धे तप्तं तु लीयते ॥ १ ॥ (४।१७।२९)
चित्ततत्त्वानि शुद्धानि सम्मिलन्ति परस्परम् ।
एकरूपाणि तोयानि यान्त्यैक्यं नाविलानि हि॥२॥(४।१७।३०)
शुद्धिर्हि चित्तस्य विवासनत्व-
मभूतसंवेदनमेकरूपम् ।
तस्याशु शुद्धया भवति प्रबुद्ध-
स्तन्मात्रयुक्त्या परसंगमेति ॥ ३ ॥(४।१७।३१)

### (आ) लोकान्तरगमनशक्तिः :—

अप्रबुद्धधियः सिद्धलोकान्पुण्यवशोदितान् ।
न समर्थाः स्वदेहेन प्राप्तुं छाया इवातपान् ॥ ४ ॥ (३।५३।२९)
अतो ज्ञानविवेकेन पुण्येनाथ वरेण च ।
पुण्यदेहेन गच्छन्ति परं लोकमनेन तु ॥ ५ ॥ (३।५३।३४)

तस्माद्ये वेद्यवेत्तारो ये वा धर्मं परं श्रिताः ।
आतिवाहिकलोकांस्ते प्राप्नुवन्तीह नेतरे ॥ ६ ॥ (३।५४।१)
आतिवाहिकतां यातं बुद्धं चित्तान्तरैर्मनः ।
सर्गजन्मान्तरगतैः सिद्धैर्मिलति नेतरत् ॥ ७ ॥ (३।२२।१०)
आतिवाहिकताज्ञानं स्थितिमेष्यति शाश्वतीम् ।
यदा तदा त्वसंकल्पाँल्लोकान्द्रक्ष्यसि पावनान् ॥ ८ ॥ (३।२२।१२)

(इ) अधिभौतिकभावनायाः प्रतिबन्धकत्वम् :—

आधिभौतिकदेहोऽहमिति यस्य प्रतिभ्रमः ।
तस्यासावणुरन्ध्रेण गन्तुं शक्नोति नानघ ॥ ९ ॥ (३।४०।८)
अहं पृथ्व्यादिदेहः खे गतिर्नास्ति ममोत्तमा ।
इति निश्चयवान्योऽन्तः कथं स्यात्तोऽन्यनिश्चयः॥१०॥(३।५३।२३)
यत्र स्वसंकल्पपुरं स्वदेहेन न लभ्यते ।
तत्रान्यसंकल्पपुरं देहोऽन्यो लभते कथम् ॥११॥ (३।२१।४३)

( ई ) आतिवाहिकतानुभवः :—

तस्यैवाभ्यसतोऽप्येति साधिभौतिकतामतिः ।
यदा शाम्यति सैवास्य तदा पूर्वा प्रवर्तते ॥ १२ ॥ (३।५७।३०)
तदा गुरुत्वं काठिन्यमिति यश्च मुधा ग्रहः ।
शाम्येत्स्वप्ननरस्येव बोद्धुर्बोधान्निरामयात् ॥ १३ ॥ (३।५७।३१))
लघुतूलसमापत्तिस्ततः समुपजायते ।
स्वप्ने स्वप्नपरिज्ञानादिव देहस्य योगिनः ॥ १४ ॥ (३।५७।३२)

स्वप्ने स्वप्नपरिज्ञानाद्यथा देहो लघुर्भवेत् !
तथा बोधादयं देहः स्थूलवत्प्लुतिमान्भवेत् ॥१५॥ (३।५७।३३)

रूढातिवाहिकदृशः प्रशाम्यत्याधिभौतिकः ।
बुधस्य दृश्यमानोऽपि शरन्मेघ इवाम्बरे ॥ १६ ॥ (३।५८।१४)

रूढातिवाहिकीभावः सर्वो भवति देहकः ।
निर्जलाम्भोदसदृशो निर्गन्धकुसुमोपमः ॥ १७ ॥ (३।५८।१५)

सद्वासनस्य रूढायामातिवाहिकसंविदि ।
देहो विस्मृतिमायाति गर्भसंस्थेव यौवने ॥ १८ ॥ (३।५८।१६)

वासनातानवं नूनं यदा ते स्थितिमेष्यति ।
तदातिवाहिको भावः पुनरेष्यति देहके ॥ १९ ॥ (३।२१।५६)

यथा सत्यपरिज्ञानाद्रज्ज्वां सर्पो न दृश्यते ।
तथातिवाहिकज्ञानाद्दृश्यते नाधिभौतिकः ॥२०॥ (३।२१।६०)

स्वप्नसंकल्पदेहान्ते देहोऽयं चेत्यते यथा ।
तथा जाग्रद्भावनान्ते उदेत्येवातिवाहिकः ॥ २१ ॥ (३।२२।३)

शुद्धसत्वानुपतितं चेतः प्रतनुवासनम् ।
आतिवाहिकतामेति हिमं तापादिवाम्बुताम् ॥ २२ ॥ (३।२२।९)

अवबोधघनाभ्यासाद्देहस्यास्यैव जायते ।
संसारवासनाकार्श्ये नूनं चित्तशरीरता ॥ २३ ॥ (३।२२।१७)

( उ ) अणुत्वप्राप्तौ ज्ञानयुक्तिः :—

असत्यमेव संकल्पभ्रमेणेदं शरीरकम् ।
जीवः पश्यति मूढात्मा बालो यक्षमिवोद्धतम् ॥२४॥ (६।८२।१७)

यदा तु ज्ञानदीपेन सम्यगालोक आगतः ।
संकल्पमोहो जीवस्य क्षीयते शरदभ्रवत् ॥ २५ ॥ (६/१।८२।१८)
शान्तिमायाति देहोऽयं सर्वसंकल्पसंक्षयात् ।
तदा राघव निःशेषं दीपस्तैलक्षये यथा ॥ २६ ॥ (६/१।८२।१९)
निद्राव्यपगमे जन्तुर्यथा स्वप्नं न पश्यति ।
जीवो हि भाविते सत्ये तथा देहं न पश्यति ॥२७॥ (६/१।८२।२०)
अतत्त्वे तत्त्वभावेन जीवो देहाद्दतः स्थितः ।
निर्देहो भवति श्रीमान् सुखी तत्त्वैकभावनात् ॥२८॥ (६/१।२८।२१)
अन्ये च विदितात्मानो भावयन्ति यथैव यत् ।
तत्तथैवाशु पश्यन्ति दृढ़भावनया तथा ॥ २९ ॥ (६/१।८२।२४)
एवं यथा यदेवेह भाव्यते दृढभावनात् ।
भूयते हि तदेवाशु तदित्यालोकितं मुहुः ॥ ३० ॥ (६/१।८२।२६)
सत्यभावनदृष्टोऽयं देहो देहो भवत्यलम् ।
दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः ॥३१॥ (६/१।८२।२७)

## २—कुण्डलिनीयोगसाध्याः सिद्धयः :—

### [ १ ] कुण्डलिनी :—

परिमण्डलिताकारा मर्मस्थानं समाश्रिता ।
आन्त्रवेष्टनिका नाम नाडी नाडीशताश्रिता ॥१॥ (६/१।८०।३६)
वीणाग्रावर्तसदृशी सलिलावर्तसन्निभा ।
लिप्यार्धोंकारसंस्थाना कुण्डलावर्तसंस्थिता ॥२॥ (६/१।८०।३७)

देवासुरमनुष्येषु मृगनक्रखगादिषु ।
कीटादिष्वब्जजान्तेषु सर्वेषु प्राणिपूदिता ॥ ३ ॥ (६।८०।३८)

शीतार्तसुप्तभोगीन्द्रभोगवद्बद्धमण्डला ।
सिता कल्पाग्निविगलदिन्दुवद्बद्धकुण्डली ॥ ४ ॥ (६।८०।३९)

उरोभ्रूमध्यरन्ध्राणि स्पृशन्ती वृत्तिचञ्चला ।
अनारतं च सस्पन्दा पन्नमानेव तिष्ठति ॥ ५ ॥ (६।८०।४०)

तस्यास्त्वभ्यन्तरे तस्मिन्कदलीकोशकोमले ।
या परा शक्तिः स्फुरति वीणावेगलसद्गतिः ॥६॥ (६।८०।४१)

सा चोक्ता कुण्डलीनाम्ना कुण्डलाकारवाहिनी ।
प्राणिनां परमा शक्तिः सर्वशक्तिजवप्रदा ॥ ७ ॥ (६।८०।४२)

अनिशं निःश्वसद्रूपा रुषितेव भुजंगमी ।
संस्थितोर्ध्वीकृतमुखी स्पन्दनाहेतुतां गता ॥ ८ ॥ (६।८०।४३)

यदा प्राणानिलो याति हृदि कुण्डलिनीपदम् ।
तदा संविदुदेत्यन्तर्भूततन्मात्रबीजभूः ॥ ९ ॥ (६।८०।४४)

यथा कुण्डलिनी देहे स्फुरत्यब्ज इवालिनी ।
तथा संविदुदेत्यन्तर्मृदुस्पर्शवशोदया ॥ १० ॥ (६।८०।४५)

स्पर्शनं मृदुनान्योन्यालिङ्गिका तत्र यन्त्रयोः ।
यथा संविदुदेत्युच्चैस्तथा कुण्डलिनी जवात् ॥११॥ (६।८०।४६)

तस्यां समस्ताः सम्बद्धा नाड्यो हृदयकोशगाः ।
उत्पद्यन्ते विलीयन्ते महार्णव इवापगाः ॥ १२ ॥ (६।८०।४७)

नित्यं पातोत्सुकतया प्रवेशोन्मुखया तथा ।
सा सर्वसंविदां बीजं ह्येका सामान्युदाहृता ॥१३॥ (६।८०।४८)

एतत्पञ्चकबीजं तु कुण्डलिन्यां तदन्तरे ।
प्राणमारुतरूपेण तस्यां स्फुरति सर्वदा ॥ १४ ॥ (६।८१।१)
सान्तः कुण्डलिनीस्पन्दस्पर्शसंवित्कलामला ।
कलोक्ता कलनेनाशु कथिता चेतनेन चित् ॥१५॥ (६।८१।२)
जीवनाज्जीवतां याता मननाच्च मनः स्थिता ।
संकल्पाच्चैव संकल्पा बोधाद्बुद्धिरिति स्मृता ॥१६॥ (६।८१।३)
अहंकारात्मतां याता सैषा पुर्यष्टकाभिधा ।
स्थिता कुण्डलिनी देहे जीवशक्तिरनुत्तमा ॥१७॥ (६।८१।४)
आपानतामुपागत्य सततं प्रवहत्यधः ।
समाना नाभिमध्यस्था उदानाख्योपरि स्थिता ॥१८॥ (६।८१।५)
अधस्त्वपानरूपैव मध्ये सौम्यैव सर्वदा ।
पुष्टाप्युदानरूपैव पुंसः स्वस्थैव तिष्ठति ॥१९॥ (६।८१।६)
सर्वयत्नमधो याति यदि यत्नान्न धार्यते ।
तत्पुमान्मृतिमायाति तया निर्गतया बलात् ॥२०॥ (६।८१।७)
समस्तैवोर्ध्वमायाति यदि युक्त्या न धार्यते ।
तत्पुमान्मृतिमायाति तया निर्गतया बलात् ॥२१॥ (६।८१।८)
सर्वथात्मनि तिष्ठेच्चेत्यक्त्वोर्ध्वाधो गमागमौ ।
तज्जन्तोर्हीयते व्याधिरन्तर्मारुतरोधतः ॥२२॥ (६।८१।९)
पुर्यष्टकपराख्यस्य जीवस्य प्राणनामिकाम् ।
विद्धि कुण्डलिनीमन्तरामोदस्येव मञ्जरीम् ॥२३॥ (६।८१।४४)
काष्ठक्रकचयोः श्लेषाद्यथा छेदः प्रवर्तते ।
द्वयोः संघर्षणादग्निः स्वभावाज्जायते तथा ॥२४॥(६।८१।६२)

मांसं कुयन्त्रजठरे स्थितं श्लिष्टमुखं मिथः ।
ऊर्ध्वाधःसंमिलत्स्थूलद्वयम्भःस्थैरिव वैतसम् ॥२५॥ (६।८१।६३)
तस्य कुण्डलिनी लक्ष्मीर्निलीनान्तर्निजास्पदे ।
पद्मरागसमुद्गस्य कोशे मुक्तावली यथा ॥ २६ ॥ (६।८१।६४)
आवर्तफलमालेव नित्यं सलसलायते ।
दण्डाहतेव भुजगी समुन्नतिविवर्तिनी ॥ २७ ॥ (६।८१।६५)
द्यावापृथिव्योर्मध्यस्था क्रियेव स्पन्दधर्मिणी ।
संविन्मधुविनोधार्का हृत्पद्मपुटषट्पदी ॥ २८ ॥ (६।८१।६६)
तत्सर्वं शक्तिपद्मादि वाह्येनाभ्यन्तरैस्तथा ।
हृदि व्याधूयते वातैः पत्रवृन्दमिवाभितः ॥२९॥ (६।८१।६७)
यद्वद्व्योम स्फुरत्यङ्ग स्वभावात्तत्र वायवः ।
बलवन्मृदु यत्किञ्चिद्भृशं कवलयन्ति तत् ॥३०॥ (६।८१।६८)
वातैराहन्यमानं तत्पद्मादि तरलायते ।
हृद्यन्यान्येति कार्येण पल्लवादि यथा तरोः ॥३१॥ (६।८१।६९)
देहेष्वाजरणां सर्वरसानां पवनोऽन्वहम् ।
जनयत्यग्निमन्योन्यसंघर्षाद्वनवेणुवत् ॥ ३२ ॥ (६।८१।७०)
स्वभावशीतवातात्मा देहस्तेनौष्ण्यमेत्यथ ।
उदितेन स सर्वाङ्गे भुवनं भानुना यथा ॥३३॥ (६।८१।७१)
सर्वतो विचरेदर्चिस्तत्तेजस्तारकाकृति ।
हृत्पद्महेमभ्रमरो योगिनां चिन्त्यतां गतम् ॥३४॥ (६।८१।७२)
तत्प्रकाशमयं ज्ञानं चिन्तितं सत्प्रयच्छति ।
येन योजनलक्षस्थं वस्तु नित्यं हि दृश्यते ॥३५॥ (६।८१।७३)

[ २ ] योगिनां देहोऽणुतां स्थूलतां च कथं गच्छति :—

( अ ) अणुत्वप्राप्तये देहस्य विलापनम् :—

हृद्यब्जचक्रकोशोर्ध्वं प्रस्फुरत्यानलः कणः ।
हेमभ्रमरवत्सांध्यविद्युल्लव इवाम्बुदे ॥ १ ॥ (६।८२।२)
स प्रवर्धनसम्विच्या वात्ययेवाशु वर्धते ।
संविद्रूपतया नूनमर्कवद्याति चोदयम् ॥ २ ॥ (६।८२।३)
संध्याभ्रप्रथमार्काभो वृद्धिमभ्यागतः क्षणात् ।
गालयत्यखिलं साङ्गं देहं हेम यथाऽनलः ॥ ३ ॥ (६।८२।४)
जलस्पर्शासहो युक्त्या गलयेत्प्रपदादपि ।
बाह्य एवानलस्पर्शात्स्वान्ते वस्तुविशेषतः ॥ ४ ॥ (६।८२।५)
स शरीरद्वयं पश्चाद्विधूय क्वापि लीयते ।
विक्षोभितेन प्राणेन नीहारो वात्यया यथा ॥ ५ ॥ (६।८२।६)
आधारनाडीनिर्हीना व्योमस्थैवावशिष्यते ।
शक्तिः कुण्डलिनी वह्नेर्धूमलेखेव निर्गता ॥ ६ ॥ (६।८२।७)
क्रोडीकृतमनोबुद्धिमयजीवाद्यहंकृतिः ।
अन्तःस्फुरच्चमत्कारा धूमलेखेव नागरी ॥ ७ ॥ (६।८२।८)
बिसे शैले तृणे भित्तावुपले दिवि भूतले ।
सा यथा योज्यते यत्र तेन निर्यात्यलं तथा ॥८॥ (६।८२।९)

(आ) स्थूलीभावेनैच्छिकनानाशरीरकल्पनाः :—

संवित्तिः सैव यात्यङ्ग रसाद्यन्तं यथाक्रमम् ।

रसेनापूर्णतामेति तन्त्रीभार इवाम्बुना ॥ ९ ॥ (६।८२।१०)
रसापूर्णा यमाकारं भावयत्याशु तत्तथा ।
धत्ते चित्रकृतो बुद्धौ रेखा राम यथा कृतिम् ॥१०॥ (६।८२।११)
दृढभावशादन्तरस्थीन्याप्नोति सा ततः ।
मातृगर्भनिपण्णेषु सुसूक्ष्मेवाङ्कुरस्थितिः ॥११॥ (६।८२।१२)
यथाभिमतमाकारं प्रमाणं वेत्ति राघव ।
जीवशक्तिरवाप्नोति सुमेर्वादि तृणादि च ॥१२॥ (६।८२।१३)

(इ) प्राणादिपवनायासजन्याः सिद्धयः :—

अन्तस्था ह्यखिलास्त्यक्त्वा साध्यार्थेतरवासनाः ।
गुदादिद्वारसंकोचान्स्थानकादिक्रियाक्रमैः ॥१३॥ (६।८०।३१)
भोजनासनशुध्या च साधुशास्त्रार्थभावनात् ।
स्वाचारात्सुजनासंगात्सर्वत्यागात्सुखासनात् ॥१४॥ (६।८०।३२)
प्राणायामघनाभ्यासाद्राम कालेन केनचित् ।
कोपलोभादिसंत्यागाद्भोगत्यागाच्च सुव्रत ॥१५॥ (६।८०।३३)
त्यागादाननिरोधेषु भृशं यान्ति विधेयताम् ।
प्राणाः प्रभुत्वात्तज्ज्ञस्य पुंसो भृत्या इवाखिलाः ॥१६॥ (६।८०।३४)
राज्यादिमोक्षपर्यन्ताः समस्ता एव सम्पदः ।
देहानिलविधेयत्वात्साध्याः सर्वस्य राघव ॥१७॥ (६।८०।३३)

(ई) कुण्डलिनीयोगजन्याः सिद्धयः :—

तां यदा पूरकाभ्यासादापूर्य स्थीयते समम् ।

तदैति मैरवं स्थैर्यं कायस्य पीनता तथा ॥१८॥ (६।८१।४५)
यदा पूरकपूर्णान्तरायतप्राणमारुतम् ।
नीयते संविदेवोर्ध्वं सोढुं घर्मक्रमश्रमम् ॥१९॥ (६।८१।४६)
सर्पीव त्वरितैवोर्ध्वं याति दण्डोपमां गता ।
नाडीः सर्वाः समादाय देहबद्धा लतोपमाः ॥२०॥ (६।८१।४७)
तदा समस्तमेवेदमुत्प्लावयति देहकम् ।
नीरन्ध्रं पवनापूर्णां भस्त्रेवाम्बुततान्तरम् ॥ २१ ॥ (६।८१।४८)
इत्यभ्यासविलासेन योगेन व्योमगामिना ।
योगिनः प्राप्नुवन्त्युच्चैर्दीना इन्द्रदशामिव ॥२२॥ (६।८१।४९)
ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा ।
बहिरूर्ध्वं कपाटस्य द्वादशाङ्गुलमूर्धनि ॥ २३ ॥ (६।८१।५०)
रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना ।
मुहूर्तं स्थितिमाप्नोति तदा व्योमगदर्शनम् ॥२४॥ (६।८१।५१)
न केचन महाबाहो भूचरेण नभस्वतः ।
अदिव्येनाश्रिता ज्ञानैर्दृश्यन्ते पुरुषेन्द्रियैः ॥२५॥ (६।८१।५३)
विज्ञानाद्दूरसंस्थेन बुद्धिनेत्रेण राघव ।
दृश्यन्ते व्योमगाः सिद्धाः स्वप्नवत्स्वार्थदा अपि ॥२६॥ (६।८१।५४)
स्वप्नावलोकनं यद्वत्तद्वत्सिद्धावलोकनम् ।
केवलोऽथ विशेषोऽयं सिद्धप्राप्तौ स्थिरार्थता ॥२७॥ (६।८१।५५)
मुखाद्बहिर्द्वादशान्ते रेचकाभ्यासयुक्तितः ।
प्राणे चिरं स्थितिं नीते प्रविशत्यपरां पुरीम् ॥ २८ ॥ (६।८१।५६)
रेचकाभ्यासयोगेन जीवः कुण्डलिनीगृहात् ।

उद्धृत्य योज्यते यावदामोदः पवनादिव ॥२९॥ (६।८२।२९)

त्यजते विरतस्पन्दो देहोऽयं काष्ठलोष्ठवत् ।
देहेऽपि जीवेऽपि मतावासेचक इवादरः ॥ ३० ॥ (६।८२।३०)

स्थावरे जङ्गमे वापि यथाभिमतयेच्छया ।
भोक्तुं तत्संपदं सम्यग्जीवोऽन्तर्विनिवेश्यते ॥ ३१ ॥ (६।८२।३१)

इति सिद्धिश्रियं भुक्त्वा स्थितं चेत्तद्वपुः पुनः ।
प्रविश्यते स्वमन्यद्वा यद्यत्तात विरोचते ॥ ३२ ॥ (६।८२।३२)

देहादयस्तथा विम्वान्व्याप्नवत्याखिलानथ ।
संविदा जगदापूर्य संपूर्णं स्थीयतेऽथवा ॥ ३३ ॥ (६।८२।३३)



# ७—आत्मा

## [ १ ] जाग्रत्स्वप्नसुषुप्तयः :—

जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं रूपं हि चेतसः ॥ १ ॥ (६।१२४।३६)
घोरं शान्तं च मूढं च आत्मचित्तमिहास्थितम् ।
घोरं जाग्रन्मयं चित्तं शान्तं स्वप्नमयं स्थितम् ॥२॥ (६।१२४।३७)
मूढं सुषुप्तभावस्थं त्रिभिर्हीनं मृतं भवेत् ।
यच्च चित्तं मृतं तत्र सत्त्वमेकं स्थितं समम् ॥३॥ (६।१२४।३८)

### ( १ ) जाग्रत् :—

जीवधातुः शरीरेऽन्तर्विद्यते येन जीव्यते ।
तेजो वीर्यं जीवधातुरित्याद्यभिधमङ्ग यत् ॥ १ ॥ (४।१९।१५)
व्यवहारी यदा कायो मनसा कर्मणा गिरा ।
भवेत्तदा मरुन्नुन्नो जीवधातुः प्रसर्पति ॥ २ ॥ (४।१९।१६)
तस्मिन्प्रसर्पत्यङ्गेषु सर्वा संविदुदेति हि ।
दृष्टत्वात्प्रैति चित्ताख्यमन्तर्लीनजगद्भ्रमम् ॥३॥ (४।१९।१७)
ईक्षणादिषु रन्ध्रेषु प्रसरन्ती वहिर्मयम् ।
नानाकारविकाराढ्यं रूपमात्मनि पश्यति ॥ ४ ॥ (४।१९।१८)
स्थिरत्वात्तत्तथैवाथ जाग्रदित्यवगम्यते ॥ ५ ॥ (४।१९।१९)

( २ ) सुषुप्तिः :—

मनसा कर्मणा वाचा यदा क्षुभ्यति नो वपुः ।
शान्तात्मा तिष्ठति स्वस्थो जीवधातुस्तदा त्वसौ ॥६॥ (४।१६।२०)
समतामागतैर्वातैः क्षोभ्यते न हृदम्बरे ।
निर्वातसदने दीपो यथाऽऽलोकैककारकः ॥ ७ ॥ (४।१६।२१)
ततः सरति नाङ्गेषु संविल्क्षुभ्यति तेन नो ।
न चेक्षणादीन्यायाति रन्ध्राण्यायाति नो बहिः ॥८॥ (४।१६।२२)
जीवोऽन्तरेव स्फुरति तैलसंविद्यथा तिले ।
शीतसंविद्धिम इव स्नेहसंविद्यथा घृते ॥ ९ ॥ (४।१६।२३)
जीवाकारा कला काचिच्चितिः स्वच्छतयात्मनि ।
दशामायाति सौषुप्तिं सौम्यवातां विचेतनाम् ॥१०॥ (४।१६।२४)

( ३ ) स्वप्नः :—

सुषुप्ते सौम्यतां यातैः प्राणैः सञ्चाल्यते यदा ।
स जीवधातुः सा संवित्ततश्चित्ततयोदिता ॥११॥ (४।१६।२६)
स्वान्तःसंस्थजगज्जालं भावाभावैः क्रमभ्रमैः ।
पश्यति स्वान्तरेवाशु स्फारं बीज इव द्रुमम् ॥१२॥ (४।१६।२७)
जीवधातुर्यदा वातैः किञ्चित्संक्षुभ्यते भृशम् ।
ततोऽस्म्यहं सुप्त इति पश्यत्यात्मनि खे गतिम् ॥१३॥ (४।१६।२८)
यदाम्भसा प्लाव्यतेऽसौ तदा वार्यादिसम्भ्रमम् ।
अन्तरेवानुभवति स्वामोदं कुसुमं यथा ॥ १४ ॥ (४।१६।२९)

यदा पित्तादिनाक्रान्तस्तदा ग्रीष्मादिसम्भ्रमम् ।
अन्तरेवानुभवति स्फारं बहिरिवाखिलम् ॥१५॥ (४।१९।३०)
रक्तापूर्णो रक्तवर्णान्देशान्कालान्बहिर्यथा ।
पश्यत्यनुभवात्मत्वात्तत्रैव च निमज्जति ॥ १६ ॥ (४।१९।३१)
सेवते वासनां यां तां सोऽन्तः पश्यति निद्रितः ।
पवनक्षोभितो रन्ध्रैर्बहिरक्षादिभिर्यथा ॥ १७ ॥ (४।१९।३२)
अनाक्रान्तेन्द्रियच्छिद्रो यतः क्षुब्धोऽन्तरेव सः ।
संविदानुभवत्याशु स स्वप्न इति कथ्यते ॥ १८ ॥ (४।१९।३३)

## [ २ ] तुर्यावस्था :—

अहंभावानहंभावौ त्यक्त्वा सदसती तथा ।
यदसक्तं समं स्वच्छं स्थितं तत्तुर्यमुच्यते ॥१९॥ (६।१२४।२३)
या स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः ।
साक्ष्यवस्था व्यवहृतौ सा तुर्यकलनोच्यते ॥२०॥(६।१२४।२४)
नैतज्जाग्रन्न च स्वप्नं सङ्कल्पानामसम्भवात् ।
सुषुप्तभावो नाप्येतदभावाज्जडता स्थितेः ॥२१॥(६।१२४।२५)
शान्तं सम्यक्प्रबुद्धानां यथा स्थितमिदञ्जगत् ।
विलीनं तुर्यमेवाहुरबुद्धानां स्थिरं स्थितम् ॥२२॥(६।१२४।२६)
अहङ्कारकलात्यागे समतायाः समुद्भवे ।
विशरारौ कृते चित्ते तुर्यावस्थोपतिष्ठते ॥२३॥ (६।१२४।२७)
निर्विकल्पा हि चित्तुर्यं तदेवास्तीह नेतरत् ॥२४॥(६।१२४।३६)

## ( ३ ) अहंभावचतुष्टयम् ।

### ( १ ) देहोऽहमिति :—

आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥१॥ ( ५।१७।१४ )
देहोऽहमिति तां विद्धि दुःखायैव न शान्तये । ( ५।७३।११ )
वर्ज्य एव दुरात्मासौ शत्रुरेव परः स्मृतः ॥२॥ (४।३३।५४)
अनेनाभिहतो जन्तुर्न भूयः परिरोहति ।
रिपुणानेन बलिना विविधाधिप्रदायिना ॥ ३ ॥ (४।३३।५५)

### ( २ ) चित्तोऽहमिति :—

स्वसङ्कल्पमयाकारं यावत्संसारभावि यत् ।
चित्तं तद्विद्धि जीवस्य रूपं रामातिवाहिकम् ॥४॥ (६।१२४।१६)

### ( ३ ) सकलातीतोऽहमिति :—

अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ।
इति तृतीयो मोक्षायतनिश्चयो जायते सताम् ॥५॥(५।१७।१५)
परोऽणु सकलातीतरूपोऽहं चेत्यहंकृतिः । (५।७३।१०)
सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रशतकल्पितः ॥६॥ ( ४।३३।५१ )

#### (अ) कथं सर्वातीतोऽहम् :—

देहस्तावज्जडो मूढो नाहमित्येव निश्चयः । ( ६।७८।१७ )

आबालमेतत्संसिद्धं मतौ चैवानुभूयते ॥ ७ ॥ ( $६_{१}$।७८।१८ )
कर्मेन्द्रियगणश्चास्मादभिन्नावयवात्मकः । ( $६_{१}$।७८।१८ )
अवयवावयविनोर्न भेदो जड एव च ॥ ८ ॥ ( $६_{१}$।७८।१९ )
प्रेर्यते मनसा यस्माद्यष्ट्येव भुवि लोष्टकः ॥९॥ ( $६_{१}$।७८।२० )
मनश्चैवं जडं मन्ये सङ्कल्पात्मकशक्ति यत् । ( $६_{१}$।७८।२० )
क्षेपणैरिव पाषाणः प्रेर्यते बुद्धिनिश्चयैः ॥१०॥ ( $६_{१}$।७८।२१ )
बुद्धिर्निश्चयरूपैवं जडा सत्तैव निश्चयः । ( $६_{१}$।७८।२१ )
खातेनेव सरिन्नूनं साहङ्कारेण वाह्यते ॥११॥ ( $६_{१}$।७८।२२ )
अहङ्कारोऽपि निःसारो जड एव शवात्मकः ( $६_{१}$।७८।२२ )
जीवेन जन्यते यत्नो बालेनेव भ्रमात्मकः ॥१२॥ ( $६_{१}$।७८।२३ )
जीवश्च चेतनाकाशो वातात्मा हृदये स्थितः । ( $६_{१}$।७८।२३ )
सुकुमारोऽन्तरन्येन केनापि परिजीवति ॥१३॥ ( $६_{१}$।७८।२४ )
जीवो जीवति जीर्णेन चिद्रूपेणात्मरूपिणा ।
चेत्यभ्रमवता जीवश्चिद्रूपेणैव जीवति ॥ १४ ॥ ( $६_{१}$।७८।२५ )
सद्वासद्वा यदाभाति चित्समाधौ सति स्वतः । ( $६_{१}$।७८।२७ )
स्वरूपमलमुत्सृज्य तदेव भवति क्षणात् ॥१५॥ ( $६_{१}$।७८।२८ )
एवं चिद्रूपमप्येतच्चेत्योन्मुखतया स्वयम् । ( $६_{१}$।७८।२८ )
जडं शून्यमसत्कल्पं चैतन्येन प्रबोध्यते ॥१६॥ ( $६_{१}$।७८।२९ )
एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः । ( $६_{१}$।७८।३१ )
असन्तः सर्व एवाहो द्वितीयेन्दुपदस्थिताः ॥१७॥ ( $६_{१}$।७८।३२ )
महाचिदेकैवास्तीह महासत्तेति योच्यते । ( $६_{१}$।७८।३२ )
निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥१८॥ ( $६_{१}$।७८।३३ )

शुद्धसंवेदनाकारा शिवं सन्मात्रमच्युतम् । ( ६।७८।३३ )
सकृद्विभाता विमला नित्योदयवती सदा॥१९॥ ( ६।७८।३४ )

(आ) शरीरात्मनोः सम्बन्धाभावः :—

नात्मा शरीरसम्बन्धी शरीरमपि नात्मनि ।
मिथो विलक्षणावेतौ प्रकाशतमसी यथा ॥२०॥ ( ६।६।६ )
देहेनास्य न सम्बन्धो मनागेवामलात्मनः ।
हेम्नः पङ्कलवेनेव तद्गतस्यापि मानवाः ॥२१॥ ( ५।५।२५ )
पृथगात्मा पृथग्देही जलपद्मलवोपमौ । ( ५।५।२६ )
मनागपि न संश्लेषः सर्वगस्यापि देहिनः ॥२२॥ ( ६।६।१३ )
तद्गतस्याप्यतद्वृत्तेरम्बरस्येव वायुतः ।
जरामरणमापच्च सुखदुःखे भवाभवौ ॥ २३ ॥ ( ६।६।१५ )
मनागपि न सन्तीह तस्मात्त्वं निर्वृतो भव ॥२४॥ ( ६।६।१६ )

(इ) आत्मनः सर्वत्रवर्तमानत्वेऽपि पुर्यष्टक एव स्फुरणम् :—

संस्थितः स हि सर्वत्र त्रिषु कालेषु भास्करः ।
सूक्ष्मत्वात्सुमहत्वाच्च केवलं न विभाव्यते ॥२५॥ (५।७३।२०)
सति पुर्यष्टके तस्मिञ्जीवः स्फुरति नोपले । ( ५।७३।२४ )
सर्वमात्ममयं विश्वं नास्त्यनात्ममयं क्वचित् ॥२६॥ (५।७२।४५)

( ४ ) अहं सर्वमिदं विश्वमिति :—

अहं जगद्वा सकलं शून्यं व्योमसमं सदा ।

एवमेष चतुर्थोऽन्यो निश्चयो मोक्षसिद्धये ॥२७॥ (५।१७।१७)

अहं खमहमादित्यो दिशोऽहमहमप्यधः ।
अहं दैत्या अहं देवा लोकाश्चाहमहं महः ॥२८॥ ( ५।७३।३ )

अहं तमोऽहमभ्राणि भूः समुद्रादिकं त्वहम् ।
रजो वायुस्तथाग्निश्च जगत्सर्वमिदं त्वहम् ॥ २९ ॥ ( ५।७३।४ )

अहं चिदम्बरे भानावहं चिद्भूतपञ्जरे ।
सुरासुरेषु चिदहं स्थावरेषु चरेषु च ॥ ३० ॥ ( ५।२७।१२ )

कुसुमेष्वहमामोदः पुष्पपत्रेष्वहं छविः ।
छविष्वहं रूपकला रूपेष्वनुभवोऽप्यहम् ॥३१॥ (५।३४।५२)

अपारपर्यन्तनभो दिक्कालादिक्रियान्वितम् ।
अहमेवेति सर्वत्र यः पश्यति स पश्यति ॥३२॥ (४।२२।२५)

सर्वशक्तिरनन्तात्मा सर्वभावान्तरस्थितः ।
अद्वितीयश्चिदित्यन्तर्यः पश्यति स पश्यति ॥ ३३ ॥ (४।२२।२८)

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
चित्तं तु नाहमेवेति यः पश्यति स पश्यति ॥३४॥(४।२२।३१)

यन्नाम किञ्चित्त्रैलोक्यं स एवावयवो मम ।
तरङ्गोऽब्धाविवेत्यन्तर्यः पश्यति स पश्यति ॥३५॥ (४।२२।३३)

## ८—मृतिः

### [ १ ] मरणं न भयावहम् :—

#### ( अ ) उपचयो महान् :—

मृतिरत्यन्तनाशश्चेत्तद्भवामयसंक्षयः । (६।१०१।२६)
मृतश्चेन्न भवेद्भूयः सोऽत्राप्युपचयो महान् ॥१॥ (६।१०१।२३)
भावाभावग्रहोत्सर्गज्वरः प्रशममागतः । (६।१०१।२३)
मरणं जीवितं तस्मान्न दुःखं न सुखं यतः ॥२॥ (६।१०१।२४)

#### ( आ ) उत्सवो वा :—

मृतस्य देहलाभश्चेन्नव एव तदुत्सवः ।
मृतिर्नाशो हि देहस्य सा मृतिः परमं सुखम् ॥३॥(६।१०१।२५)
देहाद्देहान्तरप्राप्तौ नव एव महोत्सवः ।
मरणात्मनि किं मूढा हर्षस्थाने विषीदथः ॥४॥ (६।१०१।२२)

### [ २ ] मृतिस्वरूपम् :—

मरणं सर्वनाशात्म न कदाचन विद्यते ॥ ५ ॥ (६।१८।१)
मृतो नष्ट इति प्रोक्तो मन्ये तच्च मृषा ह्यसत् । (५।७१।६४)
स देशकालान्तरितो भूत्वा भूत्वानुभूयते ॥६॥ (५।७१।६५)
स्वसङ्कल्पान्तरस्थैर्यं मृतिरित्यभिधीयते । (६।१८।१)

वासनावस्थितो जीवो यात्युत्सृज्य शरीरकम् ॥७॥(५।७१।६७)
अन्यस्मिन्विततते देशे कालेऽन्यस्मिंश्च राघव । ( ५।७१।६८ )
इतश्चेतश्च नीयन्ते जीवा वासनया स्वया ॥८॥ ( ५।७०।६९ )
स्वप्नद्रष्टा यथा स्वप्नसंसारे मृतिमाप्तवान् ।
अन्यं जाग्रन्मयं स्वप्नं द्रष्टुं भूयः स जायते ॥९॥ (६।१०५।२४)
इह जाग्रन्मृतो जन्तुः प्रबुद्धोऽन्यत्र कथ्यते । ( ६।१०५।२९ )
मृत्वान्यत्र प्रबुद्धस्य जाग्रत्स्वप्नो भवत्यलम् ॥१०॥(६।१०५।३०)
अनुभूय क्षणं जीवो मिथ्यामरणमूर्च्छनम् ।
विस्मृत्य प्राक्तनं भावमन्यं पश्यति सुव्रत ॥११॥ (३।२०।३१)
प्रतिभान्ति जगन्त्याशु मृतिमोहादनन्तरम् ।
जीवस्योन्मीलनादक्ष्णो रूपाणीवाखिलान्यलम् १२॥(३।२१।१)
निमेषेणैव जीवस्य मृतिमोहादनन्तरम् । ( ३।२०।४४ )
त्रिजगद्दृश्यसर्गश्रीः प्रतिभासमुपगच्छति ॥१३॥ (३।१०।४५)
दिक्कालकलनाकाशधर्मकर्ममयानि च ।
परिस्फुरन्त्यनन्तानि कल्पान्तस्थैर्यवन्ति च ॥१४॥ (३।२१।२)
देशकालक्रियाद्रव्यमनोबुद्धीन्द्रियादि च ।
झटित्येव मृतेरन्ते वपुः पश्यति यौवने ॥१५॥ ( ३।२०।४८ )

[ ३ ] जन्तोर्मरणावस्था :—

यदा व्यथावशान्नाड्यः स्वसंकोचविकासनैः ।
गृह्णन्ति मारुतो देहे तदोज्झति निजां स्थितिम् ॥१॥ (३।५४।५९)

प्रविष्टा न विनिर्यान्ति गताः संप्रविशन्ति नो ।
यदा वाता विनाडीत्वात्तदा स्पन्दात्स्मृतिर्भवेत् ॥२॥ (३।५४।६०)
न विशत्येव वातो न निर्याति पवनो यदा ।
शरीरनाडीवैधुर्यान्मृत इत्युच्यते तदा ॥ ३ ॥ (३।५४।६१)
नाडीप्रवाहे विधुरे यदा वातविसंस्थितिम् ।
जन्तुः प्राप्नोति हि तदा शाम्यतीवास्य चेतना ॥४॥(३।५५।२)
केवलं वातसंरोधाद्यदा स्पन्दः प्रशाम्यति ।
मृत इत्युच्यते देहस्तदासौ जडनामकः ॥ ५ ॥ (३।५५।४)
तस्मिन्देहे शवीभूते वाते चानिलतां गते ।
चेतनं वासनायुक्तं स्वात्मतत्त्वेऽवतिष्ठति ॥ ६ ॥ (३।५५।५)
जीव इत्युच्यते तस्य नामाणोर्वासनावतः । (३।५५।६)
मृते पुंसिः नभोवातैर्मिलन्ति प्राणवायवः ॥ ७ ॥ (६।१८।६)
सप्राणवातैः पवनैः स्फुरत्संकल्पगर्भितैः ।
सर्वा एव दिशः पूर्णाः पश्यामीमाः समन्ततः॥ ८ ॥ (६।१८।८)
खवातेऽन्तर्मृतप्राणाः प्राणानामन्तरे मनः ।
मनसोऽन्तर्जगद्विद्धि तिले तैलमिव स्थितम् ॥ ९ ॥ (६।१८।१०)
ततोऽसौ प्रेतशब्देन प्रोच्यते व्यवहारिभिः ।
चेतनं वासनामिश्रमामोदानिलवत्स्थितम् ॥ १० ॥(३।५५।७)
इदं दृश्यं परित्यज्य यदास्ते दर्शनान्तरे ।
स स्वप्न इव संकल्प इव नानाकृतिस्तदा ॥ ११ ॥ (३।५५।८)
तस्मिन्नेव प्रदेशेऽन्तः पूर्ववत्स्मृतिमान्भवेत् ।
तदैव मृतिमूर्च्छान्ते पश्यत्यन्यशरीरकम् ॥ १२ ॥ (३।५५।९)

यावन्तो ये मृताः केचिज्जीवा मोक्षविवर्जिताः ।
स्थितास्ते तत्र तावन्तः संसाराः पृथगक्षयाः ॥ १३ ॥(३।६३।३२)

[४] मृतिकाले मूर्खस्यैव दुःखभाजनत्वम्ः—

अभ्यस्य धारणानिष्ठो देहं त्यक्त्वा यथासुखम् ।
प्रयाति धारणाभ्यासी युक्तियुक्तस्तथैव च ॥१॥ (३।५४।३६)
मूर्खः स्वमृतिकालेऽसौ दुःखमेत्यवशाशयः । (३।५४।३७)
दीनतां परमामेति परिलूनमिवाम्बुजम् ॥ २ ॥(३।५४।३८)
अशास्त्रसंस्कृतमतिरसज्जनपरायणः ।
मृत्वानुभवत्यन्तर्दाहमग्नाविव च्युतः ॥ ३ ॥(३।५४।३९)
यदा घर्घरकण्ठत्वं वैरूप्यं दृष्टिवर्जनम् ।
गच्छत्येषोऽविवेकात्मा तदा भवति दीनधीः ॥ ४ ॥(३।५४।४४)
परमान्ध्यमनालोको दिवाप्युदिततारकः ।
साभ्रदिग्मण्डलाभोगो घनमेचकिताम्बरः ॥५॥ (३।५४।४१)
मर्मव्यथाविच्छुरितः प्रभ्रमद्दृष्टिमण्डलः ।
आकाशीभूतवसुधो वसुधाभूतखान्तरः ॥ ६ ॥ (३।५४।४२)
परिवृत्तककुप्चक्र उह्यमान इवार्णवे ।
नीयमान इवाकाशे घननिद्रोन्मुखाशयः ॥ ७ ॥ (३।५४।४३)
अन्धकूप इवापन्नः शिलान्तरिव योजितः ।
स्वयं जडीभवद्वर्णो विनिकृत्त इवाशये ॥ ८ ॥ (३।५४।४४)
पततीव नभोमार्गात्तृणावर्त इवार्पितः ।

रथे द्रुत इवारूढो हिमवद्गलनोन्मुखः ॥९॥ (३।५४।४५ )
व्याकुर्वन्निव संसारं बान्धवानस्पृशन्निव ।
भ्रमितक्षेपणेनेव वातयन्त्र इवास्थितः ॥१०॥ (३।५४।४६)
भ्रमितो वा भ्रम इव कृष्टो रसनयेव वा ।
भ्रमन्निव जलावर्ते शस्त्रयन्त्र इवार्पितः ॥११॥ (३।५४।४७)
प्रोह्यमानस्तृणमिव वहत्पर्जन्यमारुते ।
आरुह्य वारिपूरेण निपतन्निव चार्णवे ॥ १२ ॥ ( ३।५४।४८ )
अनन्तगगने श्वभ्रे चक्रावर्ते पतन्निव ।
अब्धिरुर्वीविपर्यासदशामनुभवन्स्थितः ॥१३॥ (३।५४।४९)
पतन्निवानवरतं प्रोत्पतन्निव चाभितः ।
सूत्काराकर्णनोद्भ्रान्तपूर्णसर्वेन्द्रियव्रणः ॥१४॥ (३।५४।५०)
क्रमाच्छ्यामलतां यान्ति तस्य सर्वाक्षसंविदः । (३।५४।५१)
पूर्वापरं न जानाति स्मृतिस्तानवमागता ॥१५॥ (३।५४।५२)
मनःकल्पनसामर्थ्यं त्यजत्यस्य विमोहतः ।
अविवेकेन तेनासौ महामोहे निमज्जति ॥ १६ ॥ (३।५४।५३)

[ ५ ] मरणान्तरानुभवः :—

मरणादिमयी मूर्च्छा प्रत्येकेनानुभूयते ।
यैषा तां विद्धि सुमते महाप्रलययामिनीम् ॥ १ ॥ (३।४०।३१)
तदन्ते तनुते सर्गं सर्व एव पृथक्पृथक् ।
सहजस्वप्नसंकल्पान्संभ्रमाचलनृत्यवत् ॥ २ ॥ (३।४०।३२)

महाप्रलयरात्र्यन्ते चिराद्दात्ममनो वपुः ।
यथेदं तनुते तद्वत्प्रत्येकं मृत्यनन्तरम् ॥ ३ ॥ ( ३।४०।३३ )
अन्ये त्वमिव ये जीवास्तेषां मरणजन्मसु ।
स्मृतिः कारणतामेति मोक्षाभाववशादिह ॥४॥ (३।४०।३७)
जीवो हि मृतिमूर्च्छान्ते यदन्तः प्रोन्मिषन्निव ।
अनुन्मिषित एवास्ते तत्प्रधानमुदाहृतम् ॥ ५ ॥ (३।४०।३८)
तद्व्योमप्रकृतिः प्रोक्ता तदव्यक्तं जडाजडम् ।
संस्मृतेरस्मृतेश्चैव क्रम एष भवोदये ॥ ६ ॥ ( ३।४०।३९ )
बोधोन्मुखत्वे हि महत्तत्प्रबुद्धं यदा भवेत् ।
तदा तन्मात्रदिक्कालक्रिया भूताद्युदेति खात् ॥७॥ (३।४०।४०)
तदेवोच्छूनमाबुद्धं भवतीन्द्रियपञ्चकम् ।
तदेव बुध्यते देहः स एषोऽस्यातिवाहिकः ॥८॥ (३।४०।४१)
चिरकालप्रत्ययतः कल्पनापरिपीवरः ।
आधिभौतिकताबोधमाधत्ते चैष बालवत् ॥९॥ (३।४०।४२)
ततो दिक्कालकलनास्तदाधारतया स्थिताः ।
उद्यन्त्यनुदिता एव वायोः स्पन्दक्रिया इव ॥१०॥(३।४०।४३)
वृद्धिमित्थमयं यातो मुधैव भुवनभ्रमः ।
स्वप्नाङ्गनासङ्गसमस्त्वनुभूतोऽप्यसन्मयः ॥११॥ (३।४०।४४)
यत्रैव म्रियते जन्तुः पश्यत्याशु तदैव सः ।
तत्रैव भुवनाभोगमिममित्थमिव स्थितम् ॥ १२ ॥ (३।४०।४५)
सुरपत्तनशैलार्कतारानिकरसुन्दरम् ।
जरामरणवैक्लव्यव्याधिसंकटकोटरम् ॥ १३ ॥ (३।४०।४७)

स्वभावाभावसंरम्भस्थूलसूक्ष्मचराचरम् ।
साब्ध्यद्र्युर्वीनदीशाहोरात्रिकल्पक्षणक्षयम् ॥१४॥ (३।४०।४८)
प्रत्येकमेवमुदितः संसारवनखण्डकः ॥ ( ३।४०।५१ )
अहं जातोऽमुना पित्रा किलात्रेत्याप्तनिश्चयम् ।
इयं माता धनमिदं ममेत्युदितवासनम् ॥ १५ ॥ (३।४०।४९)
सुकृतं दुष्कृतं चेदं ममेति कृतकल्पनम् ।
बालोऽभूवमहं त्वद्य युवेति विलसद्धृदि ॥ १६ ॥ (३।४०।५०)

## [ ६ ] स्वस्वकर्मानुरूपेण प्रेतानामनुभवः :—

स्ववासनानुसारेण प्रेता एतां व्यवस्थितिम् ।
मूर्च्छान्तेऽनुभवन्त्यन्तः क्रमेणैवाक्रमेण च ॥१॥ (३।५५।२६)
आदौ मृता वयमिति बुध्यन्ते तदनुक्रमात् ।
बन्धुपिण्डादिदानेन प्रोत्पन्ना इव वेदिनः ॥२॥ (३।५५।२७)
ततो यमभटा एते कालपाशान्विता इति ।
नीयमानः प्रयाम्येभिः क्रमाद्यमपुरं त्विति ॥३॥ (३।५५।२८)
उद्यानानि विमानानि शोभनानि पुनःपुनः ।
स्वकर्मभिरुपात्तानि दिव्यानीत्येव पुण्यवान् ॥४॥ (३।५५।२९)
हिमानीकण्टकश्वभ्रशस्त्रपत्रवनानि च ।
स्वकर्मदुष्कृतोत्थानि सम्प्राप्तानीति पापवान् ॥५॥ (३।५५।३०)
इयं मे सौम्यसम्पाता सरणिः शीतशाद्वला ।
स्निग्धच्छाया सवापीका पुरः संस्थेति मध्यमः ॥६॥ (३।५५।३१)

अयं प्राप्तो यमपुरमहमेष स भूतपः ।
अयं कर्मविचारोऽत्र कृत इत्यनुभूतिमान् ॥ ७ ॥ (३।५५।३२)
इतोऽयमहमादिष्टः स्वकर्मफलभोजने ।
गच्छाम्याशु शुभं स्वर्गमितो नरकमेव च ॥८॥ (३।५५।३५)
यः स्वर्गोऽयं मया भुक्तो भुक्तोयं नरकोऽथवा ।
इमास्ता योनयो भुक्ता जायेऽहं संसृतौ पुनः ॥९॥ (३।५५।३७)
भवन्ति षड्विधाः प्रेतास्तेषां भेदमिमं शृणु ।
सामान्यपापिनो मध्यपापिनः स्थूलपापिनः ॥१०॥ (३।५५।११)
सामान्यधर्मा मध्यमधर्मा चोत्तमधर्मवान् ॥११॥ (३।५५।१२)
कश्चिन्महापातकवान्वत्सरं स्मृतिमूर्च्छनम् ।
विमूढोऽनुभवत्यन्तः पाषाणहृदयोपमः ॥ १२ ॥ (३।५५।१३)
ततः कालेन सम्बुद्धो वासनाजठरोदितम् ।
अनुभूय चिरं कालं नारकं दुःखमक्षयम् ॥१३॥ (३।५५।१४)
भुक्त्वा योनिशतान्युच्चैर्दुःखाद्दुःखान्तरं गतः ।
कदाचिच्छममायाति संसारस्वप्न भ्रमे ॥ १४ ॥ (३।५५।१५)
अथवा मृतिमोहान्ते जडदुःखशताकुलाम् ।
क्षणादुद्भूतामेव हृत्स्थामनुभवन्ति ते ॥१५॥(३।५५।१५)
स्ववासनानुरूपाणि दुःखानि नरके पुनः ।
अनुभूयाथ योनीषु जायन्ते भूतले चिरात् ॥१६॥ (३।५५।१७)
अथ मध्यमपापो यो मृतिमोहादनन्तरम् ।
सशिलाजठरं जाड्यं कञ्चित्कालं प्रपश्यति ॥१७॥ (३।५५।१८)
ततः प्रबुद्धः कालेन केनचिद्वा तदैव वा ।

तिर्यगादिक्रमैर्भुक्त्वा योनीः संसारमेष्यति ॥१८॥ (३।५५।१९)

मृत एवानुभवति कश्चित्सामान्यपातकी ।

स्ववासनानुसारेण देहं सम्पन्नमक्षतम् ॥१९॥ (३।५५।२०)

स स्वप्न इव संकल्प इव चेतति तादृशम् ।

तस्मिन्नेव क्षणे तस्य स्मृतिरित्थमुदेति च ॥२०॥ (३।५५।२१)

ये तूत्तममहापुण्या मृतिमोहादनन्तरम् ।

स्वर्गविद्याधरपुरं स्मृत्या स्वनुभवन्ति ते ॥२१॥ (३।५५।२२)

ततोऽन्यकर्मसदृशं भुक्त्वाऽन्यत्र फलं निजम् ।

जायन्ते मानुषे लोके सश्रीके सज्जनास्पदे ॥२२॥ (३।५५।२३)

ये च मध्यमधर्माणो मृतिमोहादनन्तरम् ।

ते व्योमवायुवलिताः प्रयान्त्योषधिपल्लवम् ॥२३॥ (३।५५।२४)

तत्र चारूफलं भुक्त्वा प्रविश्य हृदयं नृणाम् ।

रेतसामधितिष्ठन्ति गर्भे जातिक्रमोचिते ॥२४॥ (३।५५।२५)

## [ ७ ] परलोकानुभवानन्तरम् :—

संसुप्तकरणास्त्वेवं बीजतां यात्यसौ नरे ।

तद्बीजं योनिगलितं गर्भो भवति मातरि ॥ १ ॥ (३।५५।३८)

स गर्भो जायते लोके पूर्वकर्मानुसारतः ।

भव्यो भवत्यभव्यो वा बालको ललिताकृतिः ॥२॥(३।५५।३९)

ततोऽनुभवतीन्द्वाभं यौवनं मदनोन्मुखम् ।

ततो जरां पद्ममुखे हिमाशनिमिव च्युताम् ॥ ३ ॥ (३।५५।४०)

ततोऽपि व्याधिमरणं पुनर्मरणमूर्च्छनाम् ।

पुनः स्वप्नवदायातं पिण्डैर्देहपरिग्रहम् ॥ ४ ॥ ( ३।५५।४१ )

याम्यं याति पुनर्लोकं पुनरेव भ्रमक्रमम् ।

भूयो भूयोऽनुभवति नानायोन्यन्तरोदये ॥ ५ ॥ (३।५५।४२)

इत्याजवं जवीभावमामोत्तमतिभासुरम् ।

भूयो भूयोऽनुभवति व्योम्न्येव व्योमरूपवान् ॥६॥ (३।५५।४३)

### [ ८ ] योगमार्गारूढस्य मरणानन्तरानुभवः :—

योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः । ( ६।१२६।४७ )

भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ १ ॥ (६।१२६।४८)

ततः सुरविमानेषु लोकपालपुरेषु च । ( ६।१२६।४८ )

मेरूपवनकुञ्जेषु रमते रमणीसखः ॥ २ ॥ ( ६।१२६।४९ )

ततः सुकृतसम्भारे दुष्कृते च पुरा कृते । ( ६।१२६।४९ )

भोगजाले परिक्षीणे जायन्ते योगिनो भुवि ॥३॥(६।१२६।५०)

शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् । ( ६।१२६।५० )

जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥४॥ (६।१२६।५१ )

तत्र प्राग्भावनाभ्यस्तयोगभूमिक्रमं वुधाः ।

स्मृत्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥५॥ (६।१२६।५२ )

### [ ९ ] शरीराच्छरीरान्तरप्राप्तिनियमः :—

आशापाशशताबद्धा वासनाभावधारिणः ।

कायात्कायमुपायान्ति वृक्षाद्वृक्षमिवाण्डजाः ॥१॥(४।४३।२६)

काले काले चिता जीवस्त्वन्योऽन्यो भवति स्वयम् ।
भाविताकारवानन्तर्वासनाकलिकोदयात् ॥२॥ (६/१।५१।३९)

[ १० ] आऽऽत्मज्ञानात्संसरणम् :—

तावद्भ्रमन्ति संसारे वारिण्यावर्तराशयः ।
यावन्मूढा न पश्यन्ति स्वमात्मानमनिन्दितम् ॥१॥ (४।४३।२८)
दृष्ट्वात्मानमसत्त्यक्त्वा सत्यमासाद्य संविदम् ।
कालेन पदमागत्य जायन्ते नेह ते पुनः ॥ २ ॥ (४।४३।२९)

[ ११ ] मरणान्तरे जीवन्मुक्तस्य गतिः :—

सैव देहक्षये राम पुनर्जननविर्जिता ।
विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम् ॥१॥ (५।४२।१३)
भ्रष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥२॥ (५।४२।१४)
जीवन्मुक्तपदं त्यक्त्वा देहे कालवशीकृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ३ ॥ (३।९।१४)
विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥४॥ (३।९।१५)

[ १२ ] आत्मा तु न जायते न म्रियते वा :—

न जायते न म्रियते चेतनः पुरुषः क्वचित् ।
स्वप्नसंभ्रमवद्भ्रान्तमेतत्पश्यति केवलम् ॥ १ ॥ (३।५५।६७)

पुरुषश्चेतनामात्रं स कदा क्वेव नश्यति ।
चेतनव्यतिरिक्तत्वे वदान्यत्किं पुमान्भवेत् ॥ २ ॥(३।५४।६८)
कोऽद्य यावन्मृतं ब्रूहि चेतनं कस्य किं कथम् ।
म्रियन्ते देहलक्षाणि चेतनं स्थितमक्षयम् ॥ ३ ॥ (३।५४।६९)
वासनामात्रवैचित्र्यं यज्जीवोऽनुभवेत्स्वयम् ।
तस्यैव जीवमरणे नामनी परिकल्पिते ॥ ४ ॥ (३।५४।७१)
एवं न कश्चिन्म्रियते जायते न च कश्चन ।
वासनावर्तगर्तेषु जीवो लुठति केवलम् ॥ ५ ॥ ( ३।५४।७२ )
यथा लतायाः पर्वाणि दीर्घायाः मध्यमध्यतः ।
तथा चेतनसत्ताया जन्मानि मरणानि च ॥६॥ (३।५४।६६)
शुद्धं हि चेतनं नित्यं नोदेति न च शाम्यति । ( ३।५५।३ )
न जायते न म्रियते संविदाकाशमक्षयम् ॥७॥ (६३।१०१।१६)

## [ १२ ] आयुषो न्यूनाधिकत्वकारणम् :—

देशकालक्रियाद्रव्यशुद्ध्यशुद्धी स्वकर्मणाम् ।
न्यूनत्वे चाधिकत्वे च नृणां कारणमायुषः ॥१॥ (३।५४।२९)
स्वकर्मधर्मे ह्रसति ह्रसत्यायुर्नृणामिह ।
वृद्धे वृद्धिमुपायाति सममेव भवेत्समे ॥ २ ॥ ( ३।५४।३० )
वृद्धमृत्युप्रदैर्वृद्धः कर्मभिर्मृतिमृच्छति ।
बालमृत्युप्रदैर्बालो युवा यौवनमृत्युदैः ॥३॥ (३।५४।३१)
यो यथाशास्त्रमारब्धं स्वधर्ममनुतिष्ठति ।

भाजनं भवति श्रीमान्स यथाशास्त्रमायुषः ॥४॥ (३।५४।३२)
मृत्यो न किञ्चिच्छक्यस्त्वमेको मारयितुं बलात् ।
मारणीयस्य कर्माणि तत्कर्तॄणीति नेतरत् ॥ ५ ॥ (३।२।१०)

[ १४ ] मृत्युस्तं न जिघांसति :—

दोषमुक्ताफलप्रोता वासनातन्तुसंततिः ।
हृदि न ग्रथिता यस्य मृत्युस्तं न जिघांसति ॥ १ ॥ (६।२३।५)
निःश्वासवृत्तक्रकचाः सर्वदेहलताघुणाः ।
आधयो यं न भिन्दन्ति मृत्युस्तं न जिघांसति ॥२॥ (६।२३।६)
शरीरतरुसर्पौघाश्चिन्तार्पितशिरःफणाः ।
आशा यं न दहन्त्यन्तर्मृत्युस्तं न जिघांसति ॥ ३ ॥ (६।२३।७)
रागद्वेषविषापूरः स्वमनोबिलमन्दिरः ।
लोभव्यालो न भुङ्क्ते यं मृत्युस्तं न जिघांसति ॥४॥(६।२३।८)
पीताशेषविवेकाम्बुः शरीराम्भोधिवाडवः ।
न निर्दहति यं कोपस्तं मृत्युर्न जिघांसति ॥ ५ ॥ ( ६।२३।९ )
यन्त्रं तिलानां कठिनं राशिमुग्रमिवाकुलम् ।
यं पीडयति नानङ्गस्तं मृत्युर्न जिघांसति ॥ ६ ॥ (६।२३।१०)
एकस्मिन्निर्मले येन पदे परमपावने ।
संश्रिता चित्तविश्रान्तिस्तं मृत्युर्न जिघांसति ॥७॥ (६।२३।११)
वपुःखण्डाभिपतितं शाखामृगमिवोदितम् ।
न चञ्चलं मनो यस्य तं मृत्युर्नजिघांसति ॥८॥ (६।२३।१२ )

# ६—ब्रह्मा

## [ १ ] जगत्कर्ता ब्रह्मा :—

सर्गादौ स्वप्नपुरुषन्यायेनादिप्रजापतिः ।
यथा स्फुटं प्रकचितस्तथाद्यापि स्थिता स्थितिः ॥१॥ (३।५५।४७)
सङ्कल्पयति यन्नाम प्रथमोऽसौ प्रजापतिः ।
तत्तदेवाशु भवति तस्येदं कल्पनं जगत् ॥ २ ॥ (६।१८६।६५)

## [ २ ] मन एव ब्रह्मेति कथ्यते :—

मन एव विरिञ्चित्वं तद्धि सङ्कल्पनात्मकम् !
स्ववपुः स्फारतां नीत्वा मनसेदं वितन्यते ॥१॥ ( ३।३।३४ )
विरिञ्चो मनसोरूपं विरिञ्चस्य मनो वपुः । ( ३।३।३५ )
मनस्तामिव यातेन ब्रह्मणा तन्यते जगत् ॥२॥ ( ३।३।३६ )

## [ ३ ] परस्मात्तत्वाद्ब्रह्मणः समुद्भवः :—

मनः सम्पद्यते तेन महतः परमात्मनः ।
सुस्थिरादस्थिराकारस्तरङ्ग इव वारिधेः ॥ १ ॥ (३।१।१५)
स्वयमक्षुब्धविमले यथा स्पन्दो महाम्भसि ।
संसारकारणं जीवस्तथायं परमात्मनि ॥ २ ॥ (३।१००।२५)

निस्पन्दवपुषस्तस्य स्पन्दस्तस्माच्चिदेव हि ।
प्रदेशाद्धनतामेति सौम्योऽब्धिश्चलनादिव ॥ ३ ॥ (४।४२।४)

अन्तरब्धेर्जलं यद्वत्स्पन्दास्पन्दवदीहते ।
सर्वशक्तिस्तथैकत्र गच्छति स्पन्दशक्तिताम् ॥४॥ (४।४२।५)

आत्मन्येवात्मना व्योम्नि यथा रसति मारुतः ।
तथेहात्मात्मशक्त्यैव स्वात्मन्येवैति लोलताम् ॥५॥ (४।४२।६)

स्वशिखास्पन्दशक्त्यैव दीपः सौम्यो यथोन्नतम् ।
एति तद्वदसावात्मा तत्स्वे वपुषि वल्गति ॥ ६ ॥ (५।४२।७)

जलान्तरेऽम्बुधिर्यद्वल्लसद्वारीव चञ्चलः ।
सर्वशक्तिर्वपुष्येव तथास्पन्दविलासवान् ॥ ७ ॥ (४।४२।८)

यथोल्लसति भाश्चक्रैः क्वचन्कनकसागरः ।
तथात्मनि परिस्पन्दैः स्फुरत्यन्तैश्चिदर्णवः ॥ ८ ॥ (४।४२।९)

लक्ष्यते मौक्तिकस्पन्दो यथा व्योम्नि दृशोऽदृशि ।
तथा भाति लसद्रूपा चिच्छक्तिश्चिन्महाम्बरे ॥९॥ (४।४२।१०)

किंचित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे ।
तन्मयी चित्स्फुरत्यच्छा तत्रैवोर्मिरिवार्णवे ॥१०॥ (४।४२।११)

य एवानुभवात्मायं चित्स्पन्दोऽस्ति स एव हि ।
जीवकारणकर्माख्यो बीजमेतद्धि संसृतेः ॥ ११ ॥ (३।६७।६)

शिवात्प्राक्कारणात्पूर्वं चिच्चेत्यकलनोन्मुखी ।
उदेति सौम्याज्जलधेः पयःस्पन्दो मनागिव ॥१२॥(३।६७।१८)

स्फुरणाज्जीवचक्रत्वमेति चित्तोर्मितां दधत् ।
चिद्वारिब्रह्मजलधौ कुरुते सर्गबुद्बुदान् ॥१३॥ (६।६७।१९)

[ ४ ] स्वाभाविकोऽयं ब्रह्मणः स्पन्दः :—

तस्यैवोद्यदिवाशान्ति यत्सत्त्वं संविदात्मकम् ।
स्वभावात्स्पन्दनं तत्तु जीवशब्देन कथ्यते ॥१॥ ( ३।६४।६ )
शान्तत्वापगमेच्छस्य मनाक्संवेदनात्मकम् ।
स्वाभाविकं यत्स्फुरणं चिद्व्योम्नः सोऽङ्ग जीवकः॥२॥ (३।६४।६)
यथा वातस्य चलनं कृशानोरुष्णता यथा ।
शीतता वा तुषारस्य तथा जीवत्वमात्मनः ॥ ३ ॥ (३।६४।१०)
चिद्रूपस्यात्मतत्त्वस्य स्वभाववशतः स्वयम् ।
मनाक्संवेदनमिव यत्तज्जीव इति स्मृतम् ॥ ४ ॥ ( ३।६४।११ )

[ ५ ] स्वलीलयैव ब्रह्म स्वयं स्पन्दति :—

दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः । ( ४।४४।१४ )
लीलयैव तदादत्ते दिक्कालकलितं वपुः ॥१॥ (४।४४।१५)
समुदेति स्वतस्तस्मात्कला कलनरूपिणी ।
जलादावर्तलेखेव स्फुरज्जलतयोदिता ॥ २ ॥ ( ६।६।३ )
स्वयमेवात्मनात्मान्य इव चेत्यते ॥ ३ ॥ ( ३।६७।७६ )
स्वयमेवात्मनैवात्मा शक्तिं संकल्पनामिकाम् ।
यदा करोति स्फुरता स्पन्दशक्तिमिवानिलः ॥४॥ (६।११४।१५)
तदा पृथगिवाभासं संकल्पकलनामयम् ।
मनो भवति विश्वात्मा भावयन्स्वाकृतिं स्वयम् ॥५॥(६।११४।१६)

[ ६ ] अयं स्पन्दोऽन्य इव चेत्यते :—

स्वयमन्यैवमस्मीति भावयित्वा स्वभावतः ।
अन्यतामिव संयाति स्वविकल्पात्मिकां स्वतः ॥१॥ (६।३३।२१)
स एव हि पुमान्कोपाद्यथेहान्य इव क्षणात् ।
भवत्येवं विकल्पाङ्का चित्स्वरूपान्यतां गता ॥ २ ॥ (६।३०।६६)
आदित्यव्यतिरेकेण यो भावयति राघव ।
रश्मिजालमिदं ह्येतत्तस्यान्यदिव भास्वतः ॥३॥ (६।११४।४)
कनकव्यतिरेकेण केयूरं येन भावितम् ।
केयूरमेव तत्तस्य न तस्य कनकं हि तत् ॥ ४ ॥ (६।११४।५)
सलिलव्यतिरेकेण तरङ्गो येन भावितः ।
तरङ्गबुद्धिरेवैका स्थिता तस्य न वारिधीः ॥५॥ ( ६।११४।७ )
पावकव्यतिरेकेण ज्वालाली येन भाविता ।
तस्याग्निबुद्धिर्गलति ज्वालाधीरेव तिष्ठति ॥६॥ (६।११४।१०)
किञ्चित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे । (४।४।११)
आत्मनोऽव्यतिरिक्तैव व्यतिरिक्तेव तिष्ठति ॥७॥ (४।४२।१२)

[ ७ ] सङ्कल्पस्वरूपोऽयं स्पन्दः :—

अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्तिरचितं यद्रूपं तन्मनो विदुः ॥१॥ ( ३।९६।३ )
देशकालपरिस्पन्दशक्तिसन्दीपिताथ चित् ।
संकल्पमनुधावन्ती प्रयाति कलनापदम् ॥२॥ ( ४।४२।२० )

[८] चेत्यभावनास्वरूपोऽयं स्पन्दः :–

यैषा स्वभावातिगतं स्वयं संकल्प्य धावति ।
चिच्चैत्यं स्वयमाम्लाना सा म्लाना तन्मनः स्मृतम् ॥ १ ॥
( ३।११४।१८ )

चेत्येन सहिता यैषा चित्सेऽयं कलनोच्यते । (५।१३।५३)
चितश्चेतनोन्मुखत्वं यत्तत्सङ्कल्पाङ्कुरं विदुः ॥ २ ॥ ( ४।५४।२ )
भावयन्ती चितिश्चेत्यं व्यतिरिक्तमिवात्मनः ।
संकल्पतामुपायाति बीजमङ्कुरतामिव ॥ ३ ॥ ( ४।५४।४ )

[ ९ ] प्रतिभाससमात्रत्वं ब्रह्मणः :–

प्रतिभासवशादेव मध्यस्थं चित्तजाड्ययोः ।
जीवेतराभिधं चित्तमन्तर्ब्रह्मणि दृश्यते ॥ १ ॥ (३।१००।१२)
पिच्छभ्रान्तिर्यथा व्योम्नि पयस्यावर्तधीर्यथा ।
प्रतिभासकलामात्रं मनो जीवस्तथात्मनि ॥२॥ (३।१००।१६)

( १० ) जगत्कर्तुर्निर्हेतुकोद्भवः :–

शक्तिर्निर्हेतुकैवान्तः स्फुरति स्फटिकांशुवत् ॥१॥ (६।११।३७)
तस्मादकारणं भाति वा स्वचित्तैककारणम् ।
स्वकारणादनन्यात्मा स्वयंभूः स्वयमात्मवान् ॥ २ ॥ (३।३।५)
सम्विन्मात्रस्वभावत्वाद्देहोऽहमिति चेतति ।
काकतालीयवद्भ्रान्तमाकरं तेन पश्यति ॥ ३ ॥ (३।२।३८)
चित्स्वभावात्समायातं ब्रह्मत्वं सर्वकारणम् ।

संसृतौ कारणं पश्चात्कर्म निर्माय संस्थितम् ॥ ४ ॥ (३।६४।२५)

चित्तं स्वभावात्स्फुरति चित्तः फेन इवाम्भसः ।

कर्मभिर्बध्यते पश्चाड्डिण्डीरमिव रज्जुभिः ॥ ५ ॥ (३।६४।२६)

आद्यः प्रजापतिः पूर्वं स्वयं भूरिति विश्रुतः ।

प्राक्तनानां स्वकार्याणामभावादप्यकारणः ॥ ६ ॥ ( ३।१४।७ )

असतः शशशृङ्गादेर्मृगतृष्णाम्भसो यथा ।

आलोकनादलभ्यस्य कीदृक्स्यात्किल कारणम् ॥७॥ (६।२२।८)

असत्यप्रतिभासानामेतदेवाशु कारणम् ।

यदनालोकनं नाम समालोकत्तणात्तयम् ॥८॥ ( ६।२२।१० )

स्मृतिर्न प्राक्तनी काचित्कारणं वा स्वयंम्भुवः॥९॥(३।१३।४३)

## ( ११ ) न ब्रह्मणः कर्माणि :—

प्राक्तनानि न सन्त्यस्य कर्माण्यद्य करोति नो ॥१॥ (३।२।२४)

प्राणस्पन्दोऽस्य यत्कर्म लक्ष्यते चास्मदादिभिः ।

दृश्यतेऽस्माभिरेवं तन्न त्वस्यास्त्यत्र कर्मधीः ॥२॥ (३।२।२५)

## ( १२ ) संकल्पमात्रशरीरत्वं ब्रह्मणः :—

संकल्पमात्रमेवैतन्मनो ब्रह्मेति कथ्यते ।

संकल्पाकाशपुरुषो नास्य पृथ्व्यादि विद्यते ॥ १ ॥ (३।२।५४)

यथा चित्रकृदन्तःस्था निर्देहा भाति पुत्रिका ।

तथैवभासते ब्रह्मा चिदाकाशाच्छरञ्जनम् ॥ २ ॥ (३।२।५५)

आतिवाहिक एवासौ देहोस्त्यस्य स्वयंभुवः ।

नत्वाधिभौतिको राम देहोऽजस्योपपद्यते ॥ ३ ॥ ( ३।३।६ )
सर्वेषामेव देहौ द्वौ भूतानां कारणात्मनाम् ।
अजस्य कारणाभावादेक एवातिवाहिकः ॥ ४ ॥ ( ३।३।८ )
सर्वासां भूतजातीनामेकोऽजः कारणं परम् ।
अजस्य कारणं नास्ति तेनासावेकदेहवान् ॥ ५ ॥ ( ३।३।९ )
नास्त्येव भौतिको देहः प्रथमस्य प्रजापतेः ।
आकाशात्मा च भात्येष आतिवाहिकदेहवान् ॥६॥ (३।३।१०)
चित्तमात्रशरीरोऽसौ न पृथ्व्यादिक्रमात्मकः ।
आद्यः प्रजापतिर्व्योमवपुः प्रतनुते प्रजाः ॥ ७ ॥ ( ३।३।११ )

( १३ ) ब्रह्मा त्रिजगत्स्थितेः कारणम् :—

अस्मात्पूर्वात्प्रतिस्पन्दादनन्यैतत्स्वरूपिणी ।
इयं प्रविसृता सृष्टिः स्पन्दसृष्टिरिवानिलात् ॥ १ ॥ (३।३।१५)
प्रतिभानाकृतेरस्मात्प्रतिभामात्ररूपधृक् ।
विभात्येवमयं सर्गः सत्यानुभववान्स्थितः ॥ २ ॥ ( ३।३।१६ )
मनस्तामिव यातेन ब्रह्मणा तन्यते जगत् ।
अनन्यादात्मनः शुद्धादुद्रवत्वमिव वारिणः ॥ ३ ॥ (३।३।२९)
मनो नाम्नो मनुष्यस्य विरिञ्च्याकारधारिणः ।
मनोराज्यं जगदिति सत्यरूपमिव स्थितम् ॥ ४ ॥ ( ३।३।३३ )
अहंमयो पद्मजभावना चित्संकल्पभेदाद्वितनोति विश्वम् ।
अन्तर्मुखैवानुभवत्यनन्तनिमेषकोट्यंशविधौ युगान्तम् ॥ ५ ॥
( ३।६१।३८)

[ १४ ] ब्रह्मजनितं विश्वं मनोमयम् :—

मनोमात्रं यदा ब्रह्मा न पृथ्व्यादिमयात्मकः ।
मनोमात्रमतो विश्वं यद्यज्जातं तदेव हि ॥ १ ॥ ( ३।३।२५ )
स्वभावाद्व्यतिरिक्तं तु न चित्तस्यास्ति चेतनम् ।
स्पन्दादृते यथा वायोरन्तः किं नाम चेत्यते ॥२॥ (३।६६।१६)

[ १५ ] सर्गस्यापूर्वत्वम् :—

अपूर्व एव स्वप्नोऽयं यद्वै सर्गोऽनुभूयते ॥१॥ ( ६।१९५।४१ )
महाकल्पे विमुक्तत्वाद्ब्रह्मादीनामसंशयम् । ( ३।१३।४२ )
स्मृतिर्न प्राक्तनी काचित्कारणं वा स्वयंभुवः ॥२॥ (३।१३।४३)



## १०—शक्तिः

[ १ ] ब्रह्मणः शक्तयः :—

समस्तशक्तिखचितं ब्रह्म सर्वेश्वरं सदा ।
ययैव शक्त्या स्फुरति प्राप्तां तामेव पश्यति ॥ १ ॥ (३।६७।२)

सर्वशक्तिमयो ह्यात्मा यद्यथा भावयत्यलम् ।
तत्तथा पश्यति तदा स्वसङ्कल्पविजृम्भितम् ॥२॥ (६।३३।४१)

सर्वशक्तिर्हि भगवान्यैव तस्मै हि रोचते ।
शक्तिं तामेव विततां प्रकाशयति सर्वगः ॥ ३ ॥ (३।१००।६)

सर्वशक्ति परं ब्रह्म नित्यमापूर्णमव्ययम् ।
न तदस्ति न तस्मिन्यद्विद्यते विततात्मनि ॥४॥ (३।१००।५)

ज्ञानशक्तिः क्रियाशक्तिः कर्तृताऽकर्तृताऽपि च ।
इत्यादिकानां शक्तीनामन्तो नास्ति शिवात्मनः ॥५॥(६।३७।१६)

चिच्छक्तिर्ब्रह्मणो राम शरीरेष्वभिदृश्यते ।
स्पन्दशक्तिश्च वातेषु जड़शक्तिस्तथोपले ॥ ६ ॥ ( ३।१००।७ )

द्रवशक्तिस्तथाऽम्भःसु तेजःशक्तिस्तथाऽनले ।
शून्यशक्तिस्तथाकाशे भवशक्तिर्भवस्थितौ ॥ ७ ॥ (३।१००।८)

ब्रह्मणः सर्वशक्तिर्हि दृश्यते दशदिग्गता ।
नाशशक्तिर्विनाशेषु शोकशक्तिश्च शोकिषु ॥८॥ (३।१००।९)

आनन्दशक्तिर्मुदिते वीर्यशक्तिस्तथा भटे ।
सर्गेषु सर्गशक्तिश्च कल्पान्ते सर्वशक्तिता ॥९॥ (३।१००।१०)

[ २ ] स्पन्दशक्तिः :—

स्पन्दशक्तिस्तदिच्छेदं दृश्याभासं तनोति सा ।
साकारस्य नरस्येच्छा यथा वै कल्पनापुरम् ॥१॥ (६।८४।६)
यन्नाम चेतनं यत्र तदवश्यं स्वभावतः ।
स्पन्दधर्मि भवत्येव वस्तुता हि स्वभावजा ॥२॥ (६।८३।१६)
सा राम प्रकृतिः प्रोक्ता शिवेच्छा पारमेश्वरी ।
जगन्मायेति विख्याता स्पन्दशक्तिरकृत्रिमा ॥३॥ (६।८५।१४)
प्रकृतित्वेन सर्गस्य स्वयं प्रकृतितां गता ।
दृश्याभासानुभूतानां करणात्सोच्यते क्रिया ॥४॥ (६।८४।८)

[ ३ ] प्रकृतिः :—

यदैव खलु शुद्धाया मनागपि हि संविदः ।
जडेव शक्तिरुदिता तदा वैचित्र्यमागतम् ॥१॥ (३।९६।७०)
भावदार्ढ्यात्मकं मिथ्या ब्रह्मानन्दो विभाव्यते ।
आत्मैव कोशकारेण लालादार्ढ्यात्मकं यथा ॥२॥ (३।९७।७३)
ऊर्णानाभाद्यथा तन्तुर्जायते चेतनाज्जडः ।
नित्यात्प्रबुद्धात्पुरुषाद्ब्रह्मणः प्रकृतिस्तथा ॥३॥ (३।९६।७१)
सूक्ष्मा मध्या तथा स्थूला चेति सा कल्प्यते त्रिधा । (६।९।४)
तिष्ठत्येतास्ववस्थासु भेदतः कल्प्यते त्रिधा ॥४॥ ( ६।९।५ )
सत्वं रजस्तम इति एषैव प्रकृतिः स्मृता । ( ६।९।५ )
अविद्यां प्रकृतिं विद्धि गुणत्रितयधर्मिणीम् ॥५॥ ( ६।९।६ )

एषैव संसृतिर्जन्तोरस्याः पारं परं पदम् । ( ३।९।६ )
यावत्किञ्चिदिदं दृश्यमनयैव तदाश्रितम् ॥६॥ ( ३।९।८ )

[ ४ ] शक्तिब्रह्मणोरनन्यत्वम् :—

यथैकं पवनस्पन्दमेकमौष्ण्यानलौ यथा ।
चिन्मात्रं स्पन्दशक्तिश्च तथैवैकात्म सर्वदा ॥१॥ ( ६।८४।३ )
अनन्यां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीम् ॥२॥ (६।८४।२)
व्यावृत्त्यैव तथैवास्ते शिव इत्युच्यते तदा ।
चितिशक्तेः क्रियादेव्याः प्रतिस्थानं यदात्मनि ॥३॥ (६।८४।२६)
यथा भूतस्थितेरेव तदेव शिव उच्यते ।
देव्याः क्रियायाश्चिच्छक्तेः स्वरूपिण्या महाकृतेः॥४॥(६।८४।२७)
चेतनत्वात्तथाभूतस्वभावविभवादृते ।
स्थातुं न युज्यते तस्य यथा हेम्ना निराकृति ॥५॥ (६।८२।६)
कथमास्तां वद प्राज्ञ मरिचं तिक्ततां विना । (६।८२।७ )
विना तिष्ठति माधुर्यं कथयेक्षुरसः कथम् ॥६॥ ( ६।८२।९ )
अचेतनं यच्चिन्मात्रं न तच्चिन्मात्रमुच्यते ॥७॥ (६।८२।१०)
चेतनं चेतनाधातोः किञ्चित्संस्पन्दनं विना ।
क्वचित्स्थातुं न शक्नोति वस्त्ववस्तुतया यथा ॥८॥ (६।८३।१४)
स परः प्रकृतेः प्रोक्तः पुरुषः पवनाकृतिः ।
शिवरूपधरः शान्तः शरदाकाशशान्तिमान् ॥९॥(६।८५।१५)
भ्रमति प्रकृतिस्तावत्संसारे भ्रमरूपिणी ।
स्पन्दमात्रात्मिका सेच्छा चिच्छक्तिः पारमेश्वरी ॥१०॥(६।८५।१६)

यावन्न पश्यति शिवं नित्यतृप्तमनामयम् ।		( ६।८५।१७ )
संविन्मात्रैकधर्मित्वात्काकतालीययोगतः ॥११॥ (६।८५।१८)
संविद्देवो शिवं स्पृष्ट्वा प्रकृतित्वं समुज्झति ।		(६।८५।१८)
प्रकृतिः पुरुषं स्पृष्ट्वा तन्मयीव भवत्यलम् ॥१२॥ (६।८५।१९)
तदन्तरेकतां गत्वा नदीरूपमिवार्णवे ।		( ६।८५।१९ )
चितिः शिवेच्छा सा देवं तमेवासाद्य शाम्यति ॥१३॥(६।८५।२१)
चितिनिर्वाणरूपं यत्प्रकृतिः परमं पदम् ।
प्राप्य तत्तामवाप्नोति सरिदब्धाविवाब्धिताम् ॥१४(६।८५।२६)

## ११—परं ब्रह्म

यस्मिन्सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
सर्वं सर्वतया सर्वं तत्सर्वं सर्वदा स्थितम् ॥१॥ (६/२।१८४।४६)
सर्वशक्ति परं ब्रह्म सर्ववस्तुमयं ततम् ।
सर्वदा सर्वथा सर्वं सर्वैः सर्वत्र सर्वगम् ॥२॥ ( ६/२।१४।८ )

### [ १ ] ब्रह्मणोऽनाख्यत्वम् :—

अवाच्यमनभिव्यक्तमतीन्द्रियमनामकम् । (६/२।६२।२७ )
स्वरूपं नोपदेशस्य विषयो विदुषो हि तत् ॥१॥ (६/२।३१।३७ )
प्रत्यक्षादिप्रमाणानां यदगम्यमचिह्नितम् ।
स्वानुभूतिभवं ब्रह्म वादैस्तल्लभ्यते कथम् ॥२॥ (६/२।१९५।६९)

### [ २ ] नेति नेति :—

न चेतनो न च जडो न चैवासन्न सन्मयः ।
नाहं नान्यो न चैवैको नानेको नाप्यनेकवान् ॥१॥ (५।७२।४१)
नाभ्याशस्थो न दूरस्थो नैवास्ति नच नास्ति च ।
न प्राप्यो नाति चाप्राप्यो नवा सर्वो न सर्वगः ॥२॥(५।७२।४२)
न पदार्थो नापदार्थो न पञ्चात्मा न पञ्च च ॥३॥ (५।७२।४३)

### [ ३ ] एकमनेकं वेति वक्तुमशक्यम् :—

सति द्वित्वे किलैकं स्यात्सत्येकत्वे द्विरूपता ।

कले द्वे अपि चिद्रूपे चिद्रूपत्वात्तदप्यसत् ॥१॥ (६/२।३३।४)

एकाभावादभावोऽत्र एकत्वद्वित्वयोर्द्वयोः ।

एकं विना न द्वितीयं न द्वितीयं विनैकता ॥२॥ (६/२।३३।५)

सनानातोऽप्यनानातो यथाऽऽडरसवर्हिणः ।

अद्वैतद्वैतसत्त्वात्मा तथा ब्रह्मजगद्भ्रमः ॥३॥ (६/१।४७।३१)

## [ ४ ] तदस्ति नास्ति चेति वक्तुं न युज्यते :—

नच नास्तीति तद्वक्तुं युज्यते चिद्वपुर्यदा ।

नचैवास्तीति तद्वक्तुं युक्तं शान्तमलं तदा ॥१॥ (६/१।५३।६)

यथा सदसतोः सत्ता समतायामवस्थितिः ।

यतः सदसतो रूपं भावस्थं विद्धि तं परम् ॥२॥ (६/१।४७।३२)

न सन्नासन्न मध्यं च शून्याशून्यं न चैव हि । (६/१।४८।१२)

न तदस्ति न तन्नास्ति न वागोचरमेव तत् ॥३॥ (६/१।३१।३६)

अशून्यापेक्षया शून्यशब्दार्थपरिकल्पना ।

अशून्यत्वात्सम्भवतः शून्यताशून्यते कुतः ॥४॥ (३।१०।१४)

सलिलान्तर्यथा वीचिर्मृदन्तर्घटको यथा ।

तथा यत्र जगत्सत्ता तत्कथं स्वात्मकं भवेत् ॥५॥ (३।१०।२०)

अनुत्कीर्णा यथा स्तम्भे संस्थिता शालभञ्जिका ।

तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् ॥६॥ (३।१०।७)

एवमित्थं महारम्भपूर्णमप्यजरं पदम् ।

अस्मद्दृष्ट्या स्थितं शान्तं शून्यमाकाशतोऽधिकम्॥७॥(३।१०।३६)

[ ५ ] विद्याऽविद्याऽतीतत्वं ब्रह्मणः :—

विद्याविद्यादृशोर्भेदभावनादेव भिन्नता ।
पयस्तरङ्गयोर्द्वित्वभावनादेव भिन्नता ॥ १ ॥ (६/१।१।१७)

पयस्तरङ्गयोरैक्यं यथैव परमार्थतः ।
नाविद्यात्वं न विद्यात्वमिह किञ्चन विद्यते ॥ २ ॥ (६/१।९।१८)

विद्याविद्यादृशौ त्यक्त्वा यदस्तीह तदस्ति हि ।
प्रतियोगिव्यवच्छेदवशादेतद्रघूद्वह ॥ ३ ॥ (६/१।९।१९)

विद्याविद्यादृशौ न स्तः शेषे वद्धपदो भव ।
नाविद्यास्ति न विद्यास्ति कृतं कल्पनयानया ॥४॥ (६/१।९।२०)

किञ्चिदस्ति न किञ्चिद्यच्चित्संविदिति तत्स्थितम् ।
तदेवाविदिताभासं सदविद्येत्युदाहृतम् ॥५॥ (६/१।९।२१)

विदितं सत्तदेवेदमविद्यात्तयसंज्ञितम् ।
विद्याभावादविद्याख्या मिथ्यैवोदेति कल्पना ॥६॥ (६/१।९।२२)

मिथः स्वान्ते तयोरन्तश्छायातपनयोरिव ।
अविद्यायां विलीनायां क्षीणे द्वे एव कल्पने ॥७॥ (६/१।९।२३)

एते राघव लीयेते अवाप्यं परिशिष्यते ।
अविद्यासंक्षयात्क्षीणो विद्यापक्षोऽपि राघव ॥८॥ (६/१।९।२४)

[ ६ ] तमःप्रकाशाभ्यां परं ब्रह्म :—

मुक्तं तमः प्रकाशाभ्यामित्येतदजरं पदम् । ( ३।१०।१८ )
ब्रह्मण्ययं प्रकाशो हि न सम्भवति भूतजः ॥१॥ (३।१०।१५)

महाभूतप्रकाशानामभावस्तम उच्यते ।
महाभूताभावजं तु तेनात्र न तमः क्वचित् ॥२॥ (३।१०।१६)
स्वानुभूतिः प्रकाशोऽस्य केवलं व्योमरूपिणः ।
योऽन्तरस्ति स तेनैव न त्वन्येनानुभूयते ॥३॥ (३।१०।१७)

[ ७ ] आत्मेत्यपि तस्य संज्ञा कल्पिता :—

नात्मा ॥ १ ॥ (६।५२।३०)
यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते ।
तस्य चात्मादिकाः संज्ञाः कल्पिता न स्वभावजाः॥२॥(३।५।५)
नात्मायमयमप्यात्मा संज्ञाभेद इति स्वयम् ।
तेनैव सर्वगतया शक्त्या स्वात्मनि कल्पितः ॥३॥ (५।७३।१९)

[ ८ ] न जडं नापि चेतनम् :—

जडचेतनभावादि शब्दार्थश्रीर्न विद्यते ।
अनिर्देश्यपदे पत्रलतादीव महामरौ ॥१॥ (३।९१।३६)

[ ९ ] ब्रह्मणः स्वभावो वक्तुं न युज्यते :—

ब्रह्मणः कः स्वभावोऽसाविति वक्तुं न युज्यते ।
अनन्ते परमे तत्त्वे स्वत्वास्वत्वात्यसंभवात् ॥१॥ (६।१०।१४)
अभावसव्यपेक्षस्य भावस्य सम्भवादपि ।
पदं वध्नन्ति नानन्ते स्वभावाद्या दुरुक्तयः ॥ २ ॥ (६।१०।१५)

[ १० ] ब्रह्मणः कल्पितानि नामानि :—

ऋतमात्मा परंब्रह्म सत्यमित्यादिका बुधैः ।
कल्पिता व्यवहारार्थं तस्य संज्ञा महात्मनः ॥१॥ (३।१।१२)
यः पुमान्सांख्यदृष्टीनां ब्रह्म वेदान्तवादिनाम् ।
विज्ञानमात्रं विज्ञानविदामेकान्तनिर्मलम् ॥२॥ (३।५।६)
यः शून्यवादिनां शून्यो भासको योऽर्कतेजसाम् ।
वक्ता मन्ता ऋतं भोक्ता द्रष्टा कर्ता सदैव सः ॥३॥ (३।५।७)
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ।
शिवः शशिकलाङ्कानां कालः कालैकवादिनाम् ॥४॥(५।८७।१६)
आत्मात्मनस्तद्विदुषां नैरात्म्यं तादृशात्मनाम् ।
मध्यं माध्यमिकानां च सर्वं सुसमचेतसाम् ॥५॥ (५।८७।२०)

[ ११ ] ब्रह्मणो रूपम् :—

यतः सर्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः ॥१॥ (१।१।१)
ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टादर्शनदृश्यभूः ।
कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः ॥२॥ (१।१।२)
स्फुरन्ति सीकरा यस्मादानन्दस्याम्बरेऽवनौ ।
सर्वेषां जीवनं तस्मै ब्रह्मानन्दात्मने नमः ॥३॥ (१।१।३)
आकाशपरमाणुसहस्रांशमात्रेऽपि या शुद्ध-
चिन्मात्रसत्ता विद्यते सा हि परमार्थसंवित् ॥४॥ (६।६१।६)

न दृश्यं नोपदेशार्हं नात्यासन्न दूरगम् । (६।४८।१०)
केवलानुभवप्राप्यं चिद्रूपं शुद्धमात्मनः ॥ ५ ॥ (६।४८।११)
सर्वं सर्वात्मकं चैव सर्वार्थरहितं पदम् । (६।५२।३६)
सर्वभूतात्मकं शून्यं सदसच्च परं पदम् ॥ ६ ॥ (६।५२।२७)
तन्न वायुर्न चाकाशं न बुद्ध्यादि न शून्यकम् ।
न किञ्चिदपि सर्वात्म किमप्यन्यत्परं नभः ॥७॥ (६।५२।२८)
न कालो न मनो नात्मा न सन्नासन्न देशदिक् ।
न मध्यमेतयोर्नान्तं न बोधो नाप्यबोधितम् ॥८॥ (६।५२।३०)
यत्सम्वेद्यविनिर्मुक्तं संवेदनमनिर्मितम् ।
चेत्यमुक्तं चिदाभासं तद्विद्धि परमं पदम् ॥९॥ (६।५९।४)
सा परा परमा काष्ठा सा दृशां दृगनुत्तमा ।
सा महिम्नां च महिमा गुरूणां सा तथा गुरुः॥१०॥(६।५९।५)
स तन्तुर्भूतमुक्तानां परिप्रोतहृदम्बरः ।
स भूतमरिचौघानां परमा तीक्ष्णता तथा ॥११॥ (६।५९।६)
स पदार्थे पदार्थत्वं स तत्त्वं यदनुत्तमम् ।
स सतो वस्तुनः सत्त्वमसत्त्वं वा सतः स्वतः ॥१२॥(६।५९।१०)
सर्वत्र सर्वार्थमयं सर्वतः सर्ववर्जितम् । (६।१४।१४)
सर्वं सर्वात्मकं चैव सर्वार्थरहितं पदम् ॥ १३ ॥ (६।५२।३६)
किमप्येव तदत्यच्छं बुध्यते बोधपारगैः ।
शान्तसंसारविसरैः परां भूमिमुपागतैः ॥१४॥ (६।५२।३१)
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य संस्थितम् ॥ १५ ॥ (६।१४।९)

सर्वेन्द्रियगुणैर्मुक्तं सर्वेन्द्रियगुणान्वितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१६॥(६।१४।१०)
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१७॥(६।१४।११)
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ १८ ॥ (६।३५।१६)
ईदृशं तत्परं स्थूलं यस्याग्रे यदिदं जगत् ।
परमाणुवदाभाति क्वचिदेव न भाति च ॥१९॥ (६।९६।१७)
ईदृशं तत्परं सूक्ष्मं तस्याग्रे यदिदं नभः ।
अणोः पार्श्वे महामेरुरिव स्थूलात्म लक्ष्यते ॥२०॥(६।९६।१६)
स आत्मा तच्च विज्ञानं स शून्यं ब्रह्म तत्परम् ।
तच्छ्रेयः स शिवः शान्तः सा विद्या सा परा स्थितिः२१(६।५९।६)
योऽयमन्तश्चितेरात्मा सर्वानुभवरूपकः । ( ६।५९।७ )
शरीरे संस्थितो नित्यं चिन्मात्रमिति विश्रुतः ॥२२॥ (३।७।२)
स जगत्तिलतैलात्मा स जगद्गृहदीपकः ।
स जगत्पादपरसः स जगत्पशुपालकः ॥ २३ ॥ ( ६।५९।८ )
सन्नप्यसद्यो जगति यो देहस्थोऽपि दूरगः ।
चित्प्रकाशो ह्ययं यस्मादालोक इव भास्वतः ॥२४॥ (३।५।८)
यस्माद्विष्णवादयो देवाः सूर्यादिव मरीचयः ।
यस्माज्जगन्त्यनन्तानि बुद्बुदा जलधेरिव ॥२५॥ (३।५।९)
यं यान्ति दृश्यवृन्दानि पयांसीव महार्णवम् ।
य आत्मानं पदार्थं च प्रकाशयति दीपवत् ॥२६॥ (३।५।१०)

य आकाशे शरीरे च दृषत्स्वप्सु लतासु च ।
पांसुष्वद्रिषु वातेषु पातालेषु च संस्थितः ॥२७॥ ( ३।५।११ )
व्योम येन कृतं शून्यं शैला येन घनीकृताः ।
आपो द्रुताः कृता येन दीपो यस्य वशो रविः ॥२८॥(३।५।१३)
प्रसरन्ति यतश्चित्राः संसारासारदृष्टयः ।
अक्षयामृतसम्पूर्णादम्भोदादिव वृष्टयः ॥ २९ ॥ ( ३।५।१४ )
आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन्मराविव मरीचयः ॥ ३० ॥ (३।५।१४)
नाशरूपो विनाशात्मा योऽन्तस्थः सर्वजन्तुषु ।
गुप्तो योऽप्यतिरिक्तोऽपि सर्वभावेषु संस्थितः ॥३१॥ (३।५।१६)
यश्चिन्मणिः प्रकचति प्रतिदेहसमुद्गके ।
यस्मिन्निन्दौ स्फुरन्त्येता जगज्जालमरीचयः ॥३२॥ (३।५।१८)
नियतिर्देशकालौ च चलनं स्पन्दनं क्रिया ।
इति येन गताः सत्तां सर्वसत्तातिगामिना ॥ ३३ ॥ (३।५।२२)
अत्यन्ताभाव एवास्ति संसारस्य यथास्थितेः ।
यस्मिन्बोधमहाम्बोधौ तद्रूपं परमात्मनः ॥ ३४ ॥ (३।७।२०)
द्रष्टृदृश्यक्रमो यत्र स्थितोऽप्यस्तमयं गतः ।
यदनाकाशमाकाशं तद्रूपं परमात्मनः ॥ ३५ ॥ ( ३।७।२१ )
अशून्यमिव यच्छून्यं यस्मिन्शून्यं जगत्स्थितम् ।
सर्गौघे सति यच्छून्यं तद्रूपं परमात्मनः ॥ ३६ ॥ (३।७।२२)
यन्महाचिन्मयमपि बृहत्पाषाणवत्स्थितम् ।
जडं वा जडमेवान्तस्तद्रूपं परमात्मनः ॥ ३७ ॥ ( ३।७।२३ )

सबाह्याभ्यन्तरं येन सर्वं सम्प्राप्य सङ्गमम् ।
स्वरूपसत्तामाप्नोति तद्रूपं परमात्मनः ॥ ३८ ॥ ( ३।७।२४ )
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यपर्यन्तं यदनादि निरामयम् ॥३९॥ ( ३।९।५० )
यस्मिञ्जगत्प्रस्फुरति दृष्टमौक्तिकहंसवत् ।
यश्चेदं यश्च नैवेदं देवः सदसदात्मकः ॥ ४० ॥ ( ३।९।५१ )
अकर्णजिह्वानासात्वग्नेत्रः सर्वत्र सर्वदा ।
शृणोत्यास्वादयति यो जिघ्रेत्स्पृशति पश्यति ॥४१॥(३।९।५२)
यस्यान्यदस्ति न विभोः कारणं शशशृंगवत् ।
यस्येदं च जगत्कार्यं तरङ्गौघ इवाम्भसः ॥ ४२ ॥ (३।९।५५)
सस्पन्दे समुदेतीव निःस्पन्दान्तर्गतेन च ।
इयं यस्मिञ्जगल्लक्ष्मीरलात इव चक्रता ॥ ४३ ॥ (३।९।५८)
जगन्निर्माणविलयविलासो व्यापको महान् ।
स्पन्दास्पन्दात्मको यस्य स्वभावो निर्मलोऽक्षयः॥४४॥(३।९।५९)
स्पन्दास्पन्दमयी यस्य पवनस्येव सर्वगा ।
सत्तानाम्नैव भिन्नेव व्यवहारान्न वस्तुतः ॥ ४५ ॥ (३।९।६०)
यदस्पन्दं शिवं शान्तं यत्स्पन्दं त्रिजगत्स्थितिः ।
स्पन्दास्पन्दविलासात्मा य एको भरिताकृतिः॥४६॥(३।९।६२)
नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये ।
सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः ॥ ४७ ॥ (३।१०।३९)
नास्ति दृश्यं जगद्द्रष्टा दृश्याभावाद्विलीनवत् ।
भातीति भासनं यत्स्यात्तद्रूपं तस्य वस्तुनः ॥४८॥ (३।१०।४०)

चितेर्जीवस्वभावाया यदचेत्योन्मुखं वपुः ।
चिन्मात्रं विमलं शान्तं तद्रूपं परमात्मनः ॥४९॥ (३।१०।४१)
अस्वप्नाया अनन्ताया अजडाया मनःस्थितेः ।
यद्रूपं चिरनिद्रायास्तत्तदानव शिष्यते ॥ ५० ॥ (३।१०।४३)
वेदनस्य प्रकाशस्य दृश्यस्य तमसस्तथा ।
वेदनं यदनाद्यन्तं तद्रूपं परमात्मनः ॥ ५१ ॥ ( ३।१०।४७ )
मनः स्वप्नेन्द्रियैर्मुक्तं यद्रूपं स्यान्महाचितेः ।
जङ्गमे स्थावरे चापि तत्सर्वान्तेऽवशिष्यते ॥५२॥ (३।१०।५२)
देशाद्देशान्तरं दूरं प्राप्ताया संविदो वपुः ।
निमेषेणैव तन्मध्ये चिदाकाशं तदुच्यते ॥ ५३ ॥ (६।१०६।४)
विनिवृत्ताखिलेच्छस्य पुंसः संशान्तचेतसः ।
यादृशः स्यात्समो भावः स चिदाकाश उच्यते ॥५४॥(६।१०६।६)
अनागतायां निद्रायां मनोविषयसङ्क्षये ।
पुंसः स्वस्थस्य यो भावः स चिदाकाश उच्यते ॥ (६।१०६।७)
रूपालोकमनस्कारविमुक्तस्यामृतस्य यः ।
भावः पुंसः शरद्व्योमविशदस्तच्चिदम्बरम् ॥५६॥ (६।१०६।९)
द्रष्टृदर्शनदृश्यानां त्रयाणामुदयो यतः ।
यत्र वास्तमयश्चित्खं तद्विद्धि विगतामयम् ॥५७॥ (६।१०६।११)
यत उद्यन्ति यस्मिंश्च चित्रा परिणमन्त्यलम् ।
पदार्थानुभवाः सर्वे चिदाकाशः स उच्यते॥५८॥(६।१०६।१२)
नेदं नेदं तदित्येवं सर्वं निर्णीय सर्वथा ।
यन्न किञ्चित्सदा सर्वं तच्चिद्व्योमेति कथ्यते ॥ (६।१०६।१९)

संवेद्येनापरामृष्टं शान्तं सर्वात्मकं च यत् ।
तत्सच्चिदाभासमयमस्तीह कलनोज्झितम् ॥ ६० ॥ (३।९।२)
मूकोपमोऽपि योऽमूको मन्ता योऽप्युपलोपमः ।
यो भोक्ता नित्यतृप्तोऽपि कर्ता यश्चाप्यकिंचन ॥६१॥ (३।९।६४)
योऽनङ्गोऽपि समस्ताङ्गः सहस्रकरलोचनः ।
न किंचित्संस्थितेनापि येन व्याप्तमिदं जगत् ॥६२॥ (३।९।६५)
निरिन्द्रियबलस्यापि यस्याशेषेन्द्रियक्रियाः ।
यस्य निर्मननस्यैता मनोनिर्माणरीतयः ॥६३॥ (३।९।६६)
साक्षिणि स्फार आभासे ध्रुवे दीप इव क्रियाः ।
सति यस्मिन्प्रवर्तन्ते चित्तेहाः स्पन्दपूर्विकाः ॥६४॥ (३।९।६८)
यस्माद्घटपटाकारपदार्थशतपङ्क्तयः ।
तरङ्गगणकल्लोलवीचयो वारिधेरिव ॥ ६५ ॥ (३।९।६८)
स एवान्यतयोदेति यत्पदार्थशतभ्रमैः ।
कटकाङ्गदकेयूरनूपुरैरिव काञ्चनम् ॥ ६६ ॥ (३।९।७०)
यतः कालस्य कलना यतो दृश्यस्य दृश्यता ।
मानसी कलना येन यस्य भासा विभासनम् ॥६७॥ (३।९।७३)
क्रियां रूपं रसं गन्धं शब्दं स्पर्शं च चेतनम् ।
यद्वेत्सि तदसौ देवो येन वेत्सि तदप्यसौ ॥६८॥ ( ३।९।७४ )
परमाणोरपि परं तदणीयो ह्यणीयसः ।
शुद्धं सूक्ष्मं परं शान्तं तदाकाशोदरादपि ॥६९॥ (३।१०।३२)
दिक्कालाद्यनवच्छिन्नरूपत्वादतिविस्तृतम् ।
तदानाद्यन्तमाभासं भासनीयविवर्जितम् ॥ ७० ॥ (३।१०।३३)

यद्वद्व्योम्नो हृदयं यद्वा शिलायाः पवनस्य च ।
तस्याचेत्यस्य चिद्व्योम्नस्तद्रूपं परमात्मनः ॥७१॥(३।१०।४४)
अचेत्यस्यामनस्कस्य जीवतो या स्वभावतः ।
स्यात्स्थितिः सा परा शान्ता सत्ता तस्याद्यवस्तुनः(३।१०।४५)
स्थावराणां हि यद्रूपं तच्चेद्बोधमयं भवेत् ।
मनोबुद्ध्यादिनिर्मुक्तं तत्परेणोपमीयते ॥७३॥ ( ३।१०।५३ )
चित्प्रकाशस्य यन्मध्यं प्रकाशस्यापि खस्य वा ।
दर्शनस्य च यन्मध्यं तद्रूपं ब्रह्मणो विदुः ॥७४॥ (३।१०।४६)
पदार्थौघस्य शैलादेर्बहिरन्तश्च सर्वदा ।
सत्ता सामान्यरूपेण या चित्सोऽहमलेपकः ॥७५॥(६।११।६०)
जाग्रत्स्वप्नसुषुप्तेषु तुर्यातुर्यातिगे पदे ।
समं सदैव सर्वत्र चिदात्मानमुपास्महे ॥ ७६ ॥ (६।११।६८)
परमाकाशनगरनाट्यमण्डपभूमिषु ।
स्वशक्तिवृत्तं संसारं पश्यन्ती साक्षिवत्स्थिता ॥७७॥(६।३७।१२)
प्रत्यक्षादेरगम्यत्वात्किमप्येव तदुत्तमम् ।
सर्वं सर्वात्मकं सूक्ष्ममच्छानुभवमात्रकम्॥ ७८ ॥ (६।६६।२७)
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात्सुखम्॥७९॥(३।११९।२३)



# १२—बृंहणम्

## [ १ ] ब्रह्मबृंहणं जगत्ः—

ब्रह्मबृंहैव हि जगज्जगच्च ब्रह्मबृंहणम् । (६।२।५१)
ब्रह्मैव तदनाद्यन्तमब्धिवत्सविजृम्भते ॥ १ ॥ (६।२।२७)

आत्मैव स्पन्दते विश्वं वस्तुजातैरिवोदितम् ।
तरङ्गकणकल्लोलैरनन्ताम्ब्वम्बुधाविव ॥ २ ॥ (५।७२।२३)

यदिदं किञ्चिदाभोगि जगज्जालं प्रदृश्यते ।
तत्सर्वममलं ब्रह्म भवत्येतद्व्यवस्थितम् ॥ ३ ॥ (६।११।१६)

चिदाकाशमिदं पुत्र स्वच्छं कचकचायते ।
यन्नाम तज्जगद्भाति जगदन्यन्न विद्यते ॥ ४ ॥ (६।२१३।१८)

इदमाद्यन्तरहितं सर्वं संसारनामकम् ।
चिच्चमत्कृतिनामात्म नभः कचकचायते ॥ ५ ॥ (६।६६।८)

यदिदं भासते तत्सत्परमेवात्मनि स्थितम् ।
परं परे परापूर्णं सममेव विजृम्भते ॥ ६ ॥ (६।६६।१८)

जायते नश्यति तथा यदिदं याति तिष्ठति ।
तदिदं ब्रह्मणि ब्रह्म ब्रह्मणा च विवर्तते ॥७॥ (३।१००।२८)

शून्यं शून्ये समुच्छूनं ब्रह्म ब्रह्मणि बृंहितम् ।
सत्यं विजृम्भते सत्ये पूर्णे पूर्णमिव स्थितम् ॥८॥ (६।३।११)

ब्रह्म ब्रह्मणि बृंहाभिर्ब्रह्मशक्त्येव बृंहति । (६।११।२०)
स्फुरति ब्रह्मणि ब्रह्म नाहमस्मीतरात्मकः ॥९॥ (६।११।२३)

अज्ञानमेव यद्भाति संविदाभासमेव तत् ।
यज्जगद्दृश्यते स्वप्ने संवित्कचनमेव तत् ॥१०॥ ३।११।१६)

यथा पुरमिवास्तेऽन्तर्विदेव स्वप्नसंविदः ।
तथा जगदिवाभाति स्वात्मैव परमात्मनि ॥११॥ (३।११।२०)

यदिदं भासते किञ्चित्तत्तस्यैव निरामयम् ।
कचनं काचकस्येव कान्तस्यातिमणेरिव ॥ १२ ॥ (३।२१।६८)

नेह प्रजायते किञ्चिन्नेह किञ्चिद्विनश्यति ।
जगद्गन्धर्वनगररूपेण ब्रह्म जृम्भते ॥ १३ ॥ ( ३।६७।६६ )

अपारावारविस्तारसंवित्सलिलवल्गनैः ।
चिदेकार्णव एवायं स्वयमात्मा विजृम्भते ॥ १४ ॥ (३।६५।४)

ब्रह्मणा चिन्मयेनात्मा सर्गात्मैव विभाव्यते ।
न भाव्यते चानन्यत्वाद्बीजेनान्तरिव द्रुमः ॥१५॥ (३।६१।२६)

शुद्धचिन्मात्रममलं ब्रह्मास्तीह हि सर्वगम् ।
तद्यथा सर्वशक्तित्वाद्विन्दते याः स्वयं कलाः॥१६॥(३।१४।२१)

चिन्मात्रानुक्रमेणैव सम्प्रफुल्ललतामिव ।
ननु मूर्तामभूर्तां वा तामेवाशु प्रपश्यति ॥ १७ ॥ (३।१४।२२)

यथा स्वप्ने सुषुप्ते च निद्रैकैवात्तयानिशम् ।
सर्गेऽस्मिन्प्रलये चैव ब्रह्मैकं चितिरव्ययम् ॥१८॥ (६।२१३।२२)

तस्मात्स्वप्नवदाभासः संविदात्मनि संस्थितः ।
सर्गादिनानाकृतिना परमात्मा निराकृतिः ॥१९॥(६।१६५।४४)

दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।
एकं ब्रह्मैव हि जगत्स्थितं द्वित्वमुपागतम् ॥२०॥ (७।२।२३)

यः कणो या च कणिका या वीचिर्यस्तरङ्गकः ।
यः फेनो या च लहरी तद्यथा वारि वारिणि॥२१॥(६।११।४०)
यो देहो या च कलना यद्दृश्यं यौ क्षयाक्षयौ ।
या भावरचना योऽर्थस्तथा तद्ब्रह्म ब्रह्मणि ॥२२॥ (६।११।४१)
पाताले भूतले स्वर्गे तृणे प्राण्यम्बरेऽपि च ।
दृश्यते तत्परं ब्रह्म चिद्रूपं नान्यदस्ति हि ॥ २३ ॥ (६।२।२८)

[ २ ] त्रिजगच्चिदन्तरस्ति :—

फलपुष्पलतापत्रशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥१॥(३।१००।११)
सूर्यकान्ते यथा वह्निर्यथा क्षीरे घृतं तथा । (६।६।२७)
तत्रेदं संस्थितं सर्वं देशकालक्रमोदये ।
यथा स्फुलिङ्गा अनलाद्यथा भासो दिवाकरात् ॥२॥(६।६।२८)
तस्मात्तथेमा निर्यान्ति स्फुरन्त्याः संविदश्चितः ।।३॥ (६।६।२६)
यथाम्भोधिस्तरङ्गाणां यथामलमणिस्त्विषाम् । (६।६।२६)
कोशो नित्यमनन्तानां तथा तत्संविदां त्विषाम् ॥४॥(६।६।३०)
वटश्च वटधानायामिव पुष्पफलादिमान् । (६।६।२६)
चिदन्तरस्ति त्रिजगन्मरिचे तीक्ष्णता यथा ॥ ५ ॥ (६।२।५२)
यथैतत्सरणं वायौ तथा सर्गः स्थितः परे ।
असत्कल्पेऽपि सत्कल्पः सत्येऽसत्य इवापि च ॥६॥(३।६१।२२)
अन्यरूपा यथाऽनन्या तेजस्यालोकतोदरे ।
तथा ब्रह्मणि विश्वश्रीः सत्यासत्यात्मिका चिति ७(३।६१।२३)

अनुत्कीर्णा यथा पङ्के पुत्रिका चाऽथ दारुणि।
यथा वर्णा मषीकल्पे तथा सर्गाः स्थिताः परे॥८॥(३।६१।२४)

[ २ ] ब्रह्मैव जगद्वद्भाति:—

सत्यं ब्रह्म जगच्चैकं स्थितमेकमनेकवत्।
सर्वं वा सर्ववद्भाति शुद्धं चाशुद्धवत्ततम्॥ १॥ (६।३५।६)
अशून्यं शून्यमिव च शून्यं वाऽशून्यवत्स्फुटम्।
स्फारमस्फारमिव तदस्फारं स्फारसन्निभम्॥ २॥ (६।३५।७)
अविकारं विकारीव समं शान्तमशान्तवत्।
सदेवासदिवादृश्यं तदेवातदिवोदितम्॥ ३॥ (६।३५।८)
अविभागं विभागीव निर्जाड्यं जडवद्गतम्।
अचेत्यं चेत्यभावीव निरंशं सांशशोभनम्॥ ४॥ (६।३५।९)
अनहं सोहमिव तदनाशमिव नाशवत्।
अकलङ्कं कलङ्कीव निर्वेद्यं वेद्यवाहिवत्॥ ५॥ (६।३५।१०)
आलोकि ध्वान्तघनवन्नववच्च पुरातनम्।
परमाणोरपि तनु गर्भीकृतजद्गतम्॥ ६॥ (६।३५।११)
सर्वात्मकमपि त्यक्तं दृष्टं कष्टेन भूयसा।
अजालमपि जालाढ्यं चाशेषवदनेकधा॥ ७॥ (६।३५।१२)
निर्मायमपि मायांशुमण्डलामलभास्करम्।
ब्रह्म विद्धि विदां नाथमपामिव महोदधिम्॥८॥ (६।३५।१३)

[ ४ ] चित्स्वभाव एव जगद्भासनम् :—

एष एव स्वभावोऽस्या यदेवं भाति भासुरा । ( ६।१६१।१० )
एतत्तु स्वप्नसङ्कल्पनगरेष्वनुभूयते ॥ १ ॥ ( ६।१६१।१ )

[ ५ ] ब्रह्मणि सर्गकालोऽपि निमेषांशमात्रम् :—

तुल्यकालनिमेषांशलक्षभागप्रतीति यत् ।
निजं चिदः प्रकचनं तत्सर्गौघपरम्परा ॥ १ ॥ ( ३।६१।१७ )
लक्षाकल्पजगत्संघा समुद्यन्ति गलन्ति च ।
निमेषात्कस्यचित्कल्पात्कस्यचिच्च क्रमं शृणु ॥२॥ (३।४०।३०)

[ ६ ] एकस्मिन्नेव ब्रह्मणि नानारूपसर्गताशक्तिः :—

चिति तत्त्वेऽस्ति नानाता तदभिव्यञ्जनात्मनि ।
विचित्रपिच्छिकापुञ्जो मयूराण्डरसे यथा ॥ १ ॥( ६।४७।२६)
स्फटिकान्तः सन्निवेशः स्थाणुताऽवेदनाद्यथा ।
शुद्धेऽनानापि नानेव तथा ब्रह्मोदरे जगत् ॥ २ ॥ (३।६७।३५)
ब्रह्म सर्वं जगद्वस्तु पिण्डमेकमखण्डितम् ।
फलपत्रलतागुल्मपीठबीजमिव स्थितम् ॥ ३ ॥ (३।६७।३६)
एकमेव चिदाकाशं साकारत्वमनेककम् ।
स्वरूपमजहद्धत्ते यत्स्वप्न इव तज्जगत् ॥ ४ ॥ (६।१४४।२३)
यथोर्म्यादि जले वृक्षे यथा वा शालभञ्जिकाः ।
यथा घटादयो भूमौ तथा ब्रह्मणि सर्गता ॥ ५ ॥ (६।३४।२५)

तेजःपुञ्जैर्यथा तेजः पयःपूरैर्यथा पयः ।
परिस्फुरति सस्पन्दैस्तथा चित्सर्गविभ्रमैः ॥ ६ ॥ (४।३६।१६)

[ ७ ] न ब्रह्म स्वास्मिन्नानात्वसंस्पृष्टम् ।

चित्स्थैः सर्गैश्चिदाधारैर्न स्पृष्टा चित्परा तथा ।
स्वाधारैरम्बुदैः स्वस्थैर्न स्पृष्टं गगनं यथा ॥ १ ॥ (४।३६।५)
जगदाख्ये महास्वप्ने स्वप्नात्स्वप्नान्तरं व्रजत् ।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहणम् ॥२॥ (६।७२।३)
यथा पयसि वीचीनामुन्मज्जननिमज्जनैः ।
न जलान्यत्वमेवं हि भावाभावैः परैः पदे ॥३॥ (६।१९५।२७)

[ ८ ] सान्निधिमात्रेण कर्तृताऽऽत्मनः—

सर्वकर्ताऽप्यकर्तैव करोत्यात्मा न किञ्चन ।
तिष्ठत्येवमुदासीन आलोकं प्रति दीपवत् ॥ १ ॥ (४।५६।१७)
कुर्वन्न किञ्चित्कुरुते दिनाकार्यमिवांशुमान् ।
गच्छन्न गच्छति स्वस्थः स्वास्पदस्थो रविर्यथा॥२॥(४।५६।१८)
सङ्कल्पपुरुषस्वप्नजनद्वीन्दुत्वविभ्रमम् ।
यथा पश्यसि पश्य त्वं भावजातमिदं तथा ॥ ३ ॥ (४।५६।२४)
इयं सन्निधिमात्रेण नियतिः परिजृम्भते ।
दीपसन्निधिमात्रेण निरिच्छैव प्रकाशते ॥ ४ ॥ (४।५५।२७)

अभ्रसन्निधिमात्रेण कुटजानि यथा स्वयम् ।
आत्मसन्निधिमात्रेण त्रिजगन्ति तथा स्वयम् ॥५॥(४।५६।२८)
सर्वेच्छारहिते भानौ यथा व्योमनि तिष्ठति ।
जायते व्यवहारश्च सति देवे तथा क्रिया ॥६॥ (४।५६।२९)
निरिच्छे संस्थिते रत्ने यथालोकः प्रवर्तते ।
सत्तामात्रेण देवे तु तथैवायं जगद्गणः ॥ ७ ॥ ( ४।५६।३० )
अतः स्वात्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः ॥८॥ (४।५६।३१)
सर्वेन्द्रियाद्यतीतत्वात्कर्ता भोक्ता न सन्मयः ।
इन्द्रियान्तर्गतत्वात्तु कर्ता भोक्ता स एव हि ॥९॥(४।५६।३२)
सर्वदैवाविनाशात्म कुम्भानां गगनं यथा ।
यथा मणेरयःस्पन्दे अयस्कान्तस्य कर्तृता ॥ १० ॥ (६/१।९।३१)
अकर्तुरेव हि तथा कर्तृता तस्य कथ्यते ।
मणिसन्निधिमात्रेण यथाऽयः स्पन्दते जडम् ॥११॥ (६/१।९।३२)



## १३—तादात्म्यम्

द्वैतं यथा नास्ति चिदात्मजीवयोस्तथैव भेदोऽस्ति न जीव चित्तयोः
यथैव भेदोऽस्ति न जीवचित्तयोस्तथैव भेदोऽस्ति न देहकर्मणोः ॥
॥ १ ॥ ( ३।६५।१२ )

कर्मैव देहो ननु देह एव चित्तं तदेवाहमितीह जीवः ।
स जीव एवेश्वरचित्स आत्मा सर्वः शिवस्त्वेकपदोक्तमेतत् ॥
॥ २ ॥ ( ३।६५।१२)

### [ १ ] प्रकृतेरात्मनस्तादात्म्यम् :—

नात्मनः प्रकृतिर्भिन्ना घटान्मृन्मयता यथा ।
सन्मृन्मात्रं यथा चान्तरात्मैवं प्रकृतिः स्थिता ॥१॥(६।४६।२६)
आवर्तः सलिलस्येव यः स्पन्दस्त्वयमात्मनः ।
प्रोक्तः प्रकृतिशब्देन तेनैवेह स एव हि ॥ २ ॥ ( ६।४६।३० )
यथैकः स्पन्दपवनौ नाम्ना भिन्नौ न सत्तया ।
तथैकमात्मप्रकृती नाम्ना भिन्नौ न सत्तया ॥ ३ ॥ (६।४६।३१)
अबोधादेतयोर्भेदो बोधेनैव विलीयते ।
अबोधात्सन्मयो याति रज्ज्वां सर्पभ्रमो यथा ॥४॥(६ ४६।३२)
यद्ब्रह्मात्मापि तुर्यश्च या विद्या प्रकृतिश्च या ।
तदभिन्नसदैकात्म यथा कुम्भशतेषु मृत् ॥ ५ ॥ (६।४६।२८)
ब्रह्माहं त्रिजगद्ब्रह्म त्वं ब्रह्म खलु दृश्यभूः ।
द्वितीया कलना नास्ति यथेच्छसि तथा कुरु ॥६॥ (६।४६।२३)

अविद्येयमयं जीव इत्यादिकलनाक्रमः ।
अप्रबुद्धप्रबोधाय कल्पितो वाग्विदां वरैः ॥ ७ ॥ (६/१।४९।१७)

### [ २ ] मनसो ब्रह्मणस्तादात्म्यम् :—

प्रतियोगिव्यवच्छेदसंख्यारूपादयश्च ये ।
मनःशब्दैः प्रकल्प्यन्ते ब्रह्मजान्ब्रह्म विद्धि तान् ॥१॥(३।१००।२३)
ब्राह्मी शक्तिरसौ तस्माद्ब्रह्मैव तदरिन्दम । ( ३।१००।१७ )
अन्यतां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीम् ॥२॥ (६/१।८४।२)

### [ ३ ] जगतो ब्रह्मणस्तादात्म्यम् :—

यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात् ।
न हेमकटकात्तद्वज्जगच्छब्दार्थता परे ॥ १ ॥ ( ३।१।१७ )
अनन्यच्छान्तमाभासमात्रमाकाशनिर्मलम् ।
ब्रह्मैव जगदित्येतत्सर्वं सत्वाववोधतः ॥ २ ॥ ( ३।९।३० )
कटकत्वं पृथग्घेम्नस्तरङ्गत्वं पृथग्जलात् ।
यथा न संभवत्येवं न जगत्पृथगीश्वरात् ॥ ३ ॥ ( ३(६१।४ )
यथोर्मयोऽनभिव्यक्ता भाविनः पयसि स्थिताः ।
न स्थिताश्चात्मनोऽन्यत्वाच्चित्तत्त्वे सृष्टयस्तथा ॥४॥ ( ४।३६।२ )
स्पन्दत्वं पवनादन्यन्न कदाचन कुत्रचित् ।
स्पन्द एव सदा वायुर्जगत्तस्मान्न विद्यते ॥५॥ ( ३।९।३३ )
काकतालीयवच्चित्त्वाज्जगतो भाति ब्रह्म खम् ।
स्वप्नसंकल्पपुरवत्तत्तस्माद्भिद्यते कथम् ॥६॥ ( ६/२।३४।२४ )

यथा न भिन्नमनलादौष्ण्यं सौगन्ध्यमम्बुजात् ।
कार्ष्ण्यं कज्जलतः शौक्ल्यं हिमान्माधुर्यमिक्षुतः ॥७॥ (६।३।५)
आलोकश्च प्रकाशाज्ञादनुभूतिस्तथा चितेः ।
जलाद्वीचिर्यथाऽभिन्ना चित्स्वभावात्तथा जगत् ॥८॥ (६।३।६)
यदात्ममरिचस्यान्तश्चित्त्वात्तीक्ष्णत्ववेदनम् । (५।५७।१)
यदात्मलवणस्यान्तश्चित्त्वाल्लवणवेदनम् ॥ ९ ॥ (५।५७।२)
स्वतो यदन्तरात्मेक्षोश्चित्त्वान्माधुर्यवेदनम् । (५।५७।३)
स्वतो यदात्मदृषदश्चित्त्वात्काठिन्यवेदनम् ॥१०॥ (५।५७।४)
स्वतो यदात्मशैलस्य ज्ञतया जाड्यवेदनम् । (५।५७।५)
स्वतो यदात्मतोयस्य चिद्द्रवत्वादिवर्तनम् ॥११॥ (५।५७।६)
यदात्मगगनस्यान्तश्चित्त्वाच्छून्यत्ववेदनम् । (५।५७।८)
स्वतो यदात्मवृक्षस्य शाखादिस्तस्य वेदनम् ॥१२॥ (५।५७।७)
स्वतो यदात्मकुड्यस्य नैरन्तर्यं निरन्तरम् । (५।५७।१०)
स्वतो यदात्मसत्तायाश्चित्त्वात्सत्त्वैकवेदनम् ॥१३॥ (५।५७।११)
अन्तरात्मप्रकाशस्य स्वतो यदवभासनम् । (५।५७।१२)
परमात्मगुडस्यान्तर्थ्चित्त्वादुदयात्मकम् ॥१४॥ (५।५७।१४)
अन्तरस्ति यदात्मेन्दोश्चिद्रूपं चिद्रसायनम् ।
स्वत आस्वादितं तेन तदहंतादिनोदितम् ॥१५॥ (५।५७।१३)
अनया तु वचोभङ्ग्या मया ते रघुनन्दन ।
नाहंतादिजगत्तादिभेदोऽस्तीति निदर्शितम् ॥१६॥ (५।५७।१६)
चिद्रूपेण स्वसंवित्त्या स्वचिन्मात्रं विभाव्यते ।

स्वयमेव रूपहृदयं वातेन स्पन्दनं यथा ॥१७॥ ( ३।६१।११ )

यथा क्षीरस्य माधुर्यं तीक्ष्णत्वं मरिचस्य च ।
द्रवत्वं पयसश्चैव स्पन्दनं पवनस्य च ॥ १८ ॥ ( ३।६१।२७ )

स्थितोऽनन्यो यथाऽन्यः सन्नास्ति तत्र तथात्मनि ।
सर्गो निर्गलचिद्रूपः परमात्मात्मरूपभृत् ॥१९॥( ३।६१।२८)

कचनं ब्रह्मरत्नस्य जगदित्येव यत्स्थितम् ।
तदकारणकं यस्मात्तेन न व्यतिरिच्यते ॥२०॥ ( ३।६१।२९ )

चिदग्न्यौष्ण्यं जगल्लेखा जगच्चिच्छङ्खशुक्लता ।
जगच्चिच्छैलजठरं चिज्जलद्रवता जगत् ॥२१॥ ( ३।१४।७२ )

जगच्चिदिक्षुमाधुर्यं चित्क्षीरस्निग्धता जगत् ।
जगच्चित्क्षौद्रमाधुर्यं जगच्चित्कनकाङ्गदम् ॥२२॥ ( ३।१४।७३ )

जगच्चित्सर्षपस्नेहो वीचिश्चित्सरितो जगत् ।
जगच्चिद्धिमशीतत्वं चिज्ज्वालाज्वलनं जगत् ॥२३॥(३।१४।७४)

जगच्चित्पुष्पसौगन्ध्यं चिल्लताग्रफलं जगत् ।
चित्सत्तैव जगत्सत्ता जगत्सत्तैव चिद्वपुः ॥२४॥( ३।१४।७५ )

चित्त्वं चेत्यविकल्पेन स्वयं स्फुरति तन्मयम् ।
विकारादि तदेवान्तस्तत्सारत्वान्न भिद्यते ॥२५॥ ( ६।३३।७ )

पुष्पपल्लवपत्रादि लताया नेतरद्यथा ।
द्वित्वैकत्वजगत्त्वादि त्वन्त्वाहंत्वं तथा चितेः ॥२६॥(६।३३।१२)

अविकल्पतदात्मत्वात्सत्त्वासत्त्वैकतैव च ।
अवयवावयविता शब्दार्थौ शशशृङ्गवत् ॥ २७ ॥ ( ३।१४।७७)

## [ ४ ] जगद्विना नेशस्य संस्थितिः :—

सन्निवेशं विना सत्ता यथा हेम्नो न विद्यते। ( ६।६६।४३ )
तथा जगदहंभावं विना नेशस्य संस्थितिः ॥१॥ (६।६६।४४)
चित्सत्तैव जगत्सत्ता जगत्सत्तैव चिद्वपुः ॥ २ ॥ ( ३।१४।७५)
अत्र भेदविकारादि नखे मलमिव स्थितम् ॥ ३ ॥ (३।१४।७६)

## [ ५ ] सर्वं खल्विदं ब्रह्म :—

करणं कर्म कर्ता च जननं मरणं स्थितिः ।
सर्वं ब्रह्मैव नह्यस्ति तद्विना कल्पनेतरा ॥१॥ ( ३।१००।३० )
ब्रह्मव्योम जगज्जालं ब्रह्मव्योम दिशो दश ।
ब्रह्मव्योम कलाकालदेशद्रव्यक्रियादिकम् ॥२॥ (६।६०।२८)
पदार्थजातं शैलादि यथा स्वप्ने पुरादि च ।
चिदेवैकं परं व्योम तथा जाग्रत्पदार्थभूः ॥ ३ ॥ (६।५६।३)
परमार्थघनं पृथ्वी परमार्थघनं नभः ।
परमार्थघनं शैलाः परमार्थघनं द्रुमाः ॥ ४ ॥ ( ३।५५।४५ )
यदिदं किञ्चिदाभोगि जगज्जालं प्रदृश्यते ।
तत्सर्वममलं ब्रह्म भवत्येतद्व्यवस्थितम् ॥ ५ ॥ ( ६।११।१६ )
पाताले भूतले स्वर्गे तृणे प्राण्यम्बरेऽपि च ।
दृश्यते तत्परं ब्रह्म चिद्रूपं नान्यदस्ति हि ॥ ६ ॥ (६।२।२८)

---

## १४—जगन्मिथ्यात्वम्

मायेयं स्वप्नवद्भ्रान्तिर्मिथ्यारचितचक्रिका ।
मनोराज्यमिवालोलसलिलावर्तसुन्दरी ॥ १ ॥ ( ४।४७।४१ )

### [ १ ] सत्यासत्यनिर्णयः :—

आदावन्ते च यन्नित्यं तत्सत्यं नाम नेतरत् । ( ५।५।९ )
आदावन्ते च यत्सत्यं वर्तमाने सदैव तत् ॥ १ ॥(४।४५।४६)
आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा । (४।४५।४५)
आदावन्ते च यन्नास्ति कीदृशी तस्य सत्यता ॥२॥ ( ५।५।९ )
यदस्ति तस्य नाशोऽस्ति न कदाचन राघव ॥३॥ (३।४।६२)

### [ २ ] न सन्नासज्जगत् :—

न सन्नासन्न सञ्जातश्चेतसो जगतो भ्रमः ।
अथ धीसमवायानामिन्द्रजालमिवोत्थितः ॥ १ ॥ ( ३।६५।६ )
नातः सत्यमिदं दृश्यं न चासत्यं कदाचन । ( ३।४४।३३ )
न तत्सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा ॥ २ ॥ (३।४४।४१)
न सत्यं न च मिथ्यैव स्वप्नजालमिवोत्थितम् । (६/१।१४।२०)
एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते ॥३॥ (३।४४।२७)

### [ ३ ] जगतः सदसन्मयत्वम् :—

सती वाप्यसती तापनद्येव लहरी चला ।

मनसेहेन्द्रजालश्रीर्जागती प्रवितन्यते ॥ १ ॥ ( ३।१।२६ )

असत्यमस्थैर्यवशात्सत्यं संप्रतिभा सतः ।

यथा स्वप्नस्तथा चित्तं जगत्सदसदात्मकम् ॥ २ ॥ (३।६५।५)

यथा नभसि मुक्तालीपिच्छकेशोण्डूकादयः ।

असत्याः सत्यतां याता भात्येवं दुर्दृशां जगत् ॥३॥ (३।४२।७)

असत्यमेव सत्याभं प्रतिभानमिदं स्थितम् । ( ३।५४।२१ )

अकृतं चानुभूतं च न सत्यं सत्यवत्स्थितम् ॥४॥ ( ३।१३।४२ )

## [ ४ ] जगतो भ्रान्तिमात्रत्वम् :—

एवं तावदिदं विद्धि दृश्यं जगदिति स्थितम् ।

अहं चेत्याद्यनाकारं भ्रान्तिमात्रमसन्मयम् ॥ १ ॥ ( ४।१।२ )

मृगतृष्णाम्बुवासत्यं सत्यत्वप्रत्ययप्रदम् । ( ४।१।७ )

अनुभूतं मनोराज्यमिवासत्यमवास्तवम् ॥ २ ॥ ( ४।१।१२ )

शून्ये प्रकचितं नानावर्णमाकारितात्मकम् ।

अपिण्डगृहमाशून्यमिन्द्रचापमिवोत्थितम् ॥ ३ ॥ ( ४।१।२३ )

जगदादावनुत्पन्नं यच्चेदमनुभूयते ।

तत्संविद्व्योमकचनं स्वप्नस्त्रीसुरतं यथा ॥ ४ ॥ (३।५४।२०)

मृगतृष्णा यथा तापान्मनसोऽनिश्चयात्तथा ।

असन्त इव दृश्यन्ते सर्वे ब्रह्मादयोऽप्यमी ॥ ५ ॥ (४।४५।१७)

मिथ्याज्ञानघनाः सर्वे जगत्याकारराशयः ।

यथा नौयायिनो मिथ्या स्थाणुस्पन्दमतिस्तथा ॥६॥(४।४५।१८)

मनोऽव्यामोह एवेदं रज्ज्वामहिभयं यथा ।
भावनामात्रवैचित्र्याच्चिरमावर्तते जगत् ॥७॥ (४।४५।२६)

मिथ्यात्मिकैव सर्गश्रीर्भवतीह महामते ।
तीरद्रुमलतोन्मुक्तपुष्पालीव तरङ्गिणी ॥ ८ ॥ (३।६२।४)

स्वप्नेन्द्रजालपुरवत्संकथेहापुराद्रिवत् ।
संकल्पवदसत्यैव भाति सर्गानुभूतिभूः ॥ ९ ॥ (३।६२।५)

समस्तस्याप्रबुद्धस्य मनोजातस्य कस्यचित्
बीजं विना मृषैवेयं मिथ्यारूढिमुपागता ॥१०॥ (३।५७।१९)

स्वप्नोपलम्भं सर्गाख्यं स सर्वोऽनुभवन्स्थितः ।
चिरमावृत्तदेहात्मा भूचक्रभ्रमणं यथा ॥ ११ ॥ (३।५७।२०)

मिथ्यादृष्टय एवेमाः सृष्टयो मोहदृष्टयः ।
मायामात्रदृशो भ्रान्तिः शून्याः स्वप्नानुभूतयः॥१२॥(३।५७।५४)

प्रतिभाससमुत्थानं प्रतिभासपरिक्षयम् ।
यथा गन्धर्वनगरं तथा संसृतिविभ्रमः ॥१३॥ (६।३३।४५)

स्वप्नार्थमृगतृष्णाम्बुद्वीन्दु सङ्कल्पितार्थवत् ।
मिथ्या जगदहं त्वं च भाति केशोण्डुकं यथा॥१४॥(६।१९०।१३)

मायामात्रकमेवेदमरोधकमभित्तिमत् ।
इदं भास्वरमाभातं स्वप्नसंदर्शनं स्थितम् ॥१५॥(३।६०।३६)

भ्रान्तिरेवमनन्तेऽयं चिद्व्योमव्योम्नि भासुरा ।
अपकुड्या जगन्नाम्नी नगरी कल्पनात्मिका ॥१६॥ (३।२१।४)

एतज्जालमसद्रूपं चिद्भानोः समुपस्थितम् ।
यथा स्वप्नमुहूर्तेऽन्तः सम्वत्सरशतभ्रमः ॥१७॥ (३।४१।५०)

यथा सङ्कल्पनिर्माणे जीवनं मरणं पुनः ।
यथा गन्धर्वनगरे कुडचमण्डनवेदनम् ॥ १८ ॥ (३।४१।५१)

यथा नौयानसंरम्भे वृक्षपर्वतवेपनम् ।
यथा स्वधातुसंक्षोभे पूर्वपर्वतनर्तनम् ॥१९॥ ( ३।४१।५२ )

यथा समञ्जसं स्वप्ने स्वशिरःप्रविकर्तनम् ।
मिथ्यैवैवमियं प्रौढा भ्रान्तिराततरूपिणी ॥२०॥ (३।४१।५३)

यथा मरौ जलं बुद्धं कटकत्वं च हेमनि ।
असत्सदिव भातीदं तथा दृश्यत्वमात्मनि ॥२१॥(३।२८।१५)

ससर्वावरणा एते महत्यन्तर्विवर्जिते ।
ब्रह्माण्डा भान्ति दुर्दृष्टेर्व्योम्नि केशोण्डूको यथा २२(३।३०।१०)

यथा द्वित्वं शशाङ्कादौ पश्यत्यक्षिमलाविलम् ।
चिच्चेतनकलाक्रान्ता तथैव परमात्मनि ॥ २३ ॥ ( ३।६६।७ )

यथा मदवशाद्भ्रान्तान्क्षीवः पश्यति पादपान् ।
तथा चेतनविक्षुब्धान्संसरांश्चित्प्रपश्यति ॥ २४ ॥ (३।६६।८)

यथा लीलाभ्रमाद्बालाः कुम्भकृच्चक्रवज्जगत् ।
भ्रान्तं पश्यन्ति चित्तात्तु विद्धि दृश्यं तथैव हि॥२५॥(३।६६।९)

पत्रमात्रादृते नान्यत्कदल्या विद्यते यथा ।
भ्रममात्रादृते नान्यज्जगतो विद्यते तथा ॥ २६ ॥ (२।६६।४)

अलीकमिदमुत्पन्नमलीकं च विवर्धते ।
अलीकमेव स्वदते तथालीकं विलीयते ॥ २७ ॥ (३।६७।७६)

[ ५ ] जीवस्य मिथ्यात्वम् :—

आत्मैवानात्मवदिह जीवो जगति राजते ।
द्वीन्दुत्वमिव दुर्दृष्टेः सच्चासच्च समुत्थितम् ॥१॥ (३।१००।३५)
चिच्छक्तेः स्पन्दशक्तेश्च सम्बन्धः कल्प्यते मनः ।
मिथ्यैव तत्समुत्पन्नं मिथ्याज्ञानं तदुच्यते ॥ २ ॥ (५।१३।८८)
एषा ह्यविद्या कथिता मायैषा सा निगद्यते ।
परमेतत्तदज्ञानं संसारादिविषप्रदम् ॥ ३ ॥ ( ५।१३।८६ )

[ ६ ] अविद्या :—

संसारबीजकणिका यैषा विद्या रघूद्वह ।
एषा ह्यविद्यामानैव सतीव स्फारतां गता ॥ १ ॥(३।११३।११)
दृश्यते प्रकराभासा सदर्थे नोपयुज्यते । ( ३।११३।१५ )
अन्तःशून्यापि सर्वत्र दृश्यते सारसुन्दरी ॥२॥ (३।११३।१७)
न क्वचित्संस्थितापीह सर्वत्रैवोपलक्ष्यते । ( ३।११३।१७ )
निमेषमप्यतिष्ठन्ती स्थैर्याशङ्कां प्रयच्छति ॥३॥(३।११३।१८)
प्रतिभासवशादेषा त्रिजगन्ति महान्ति च ।
मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च ॥ ४ ॥ (३।११३।२७)
मनोराज्यमिवाकारभासुरा सत्यवर्जिता ।
सहस्रशतशाखापि न किञ्चित्परमार्थतः ॥५॥ (३।११३।३३)
इयं दृश्यभरभ्रान्तिर्नन्वविद्येति चोच्यते ।
वस्तुतो विद्यते नैषा तापनद्यां यथा पयः ॥ ६ ॥ (६।५२।५)

अविद्येति धृता संविद्ब्रह्मणात्मनि सत्तया ।
तद्भ्रमेणासदप्यस्याः सद्रूपमिव लक्ष्यते ॥७॥ (६।१६०।११)
असन्मयमविद्याया रूपमेव तदेव हि ।
यद्वीक्षितासती नूनं नश्यत्येव न दृश्यते ॥८॥ ( ६।५१।१३ )

( अ ) चित्तमेवाविद्या :—

चित्तमेव सकलाडम्बरकारिणीमविद्यां विद्धि ।
सा विचित्रकेन्द्रजालवशादिदमुत्पादयति ।
अविद्या चित्तजीवबुद्धिशब्दानां भेदोनास्ति
वृक्षतरुशब्दयोरिव ॥ १ ॥ ( ३।११६।८ )

( आ ) अविद्याया असत्ता :—

कृता शास्त्रैः प्रबोधाय ॥ १ ॥ ( ६।५१।१७ )
नामैवेदमविद्येति भ्रममात्रमसद्विदुः ।
न विद्यते या सा सत्या कीदृङ्नाम भवेत्किल ॥२॥ (६।४६।१४)
ब्रह्मतत्त्वमिदं सर्वमासीदस्ति भविष्यति ।
निर्विकारमनाद्यन्तं नाविद्यास्तीति निश्चयः ॥३॥ (६।४०।११)
कुत एषा कथं चेति विकल्पाननुदाहरन् ।
नेदमेषा न चास्तीति स्वयं ज्ञास्यसि बोधतः ॥४॥ (६।५२।७)

[ ७ ] माया :—

इति मायेव दुष्पारा चिच्छक्तिः परिजृम्भते ।

इत्थमाद्यन्तरहिता ब्राह्मी शक्तिरनामया ॥ १ ॥ (६।७०।१८)

ईदृशी राम मायेयं या स्वनाशेन हर्षदा ।
न लक्ष्यते स्वभावोऽस्याः प्रेक्षमाणैव नश्यति ॥२॥ (४।४१।१५)

विवेकमाच्छादयति जगन्ति जनयत्यलम् ।
न च विज्ञायते कैषा पश्याश्चर्यमिदं जगत् ॥३॥ (४।४१।१६)

अप्रेक्ष्यमाणा स्फुरति प्रेक्षिता तु विनश्यति ।
मायेयमपरिज्ञायमानरूपैव वल्गति ॥ ४ ॥ ( ४।४१।१७ )

नूनं स्थितिमुपायाता समासाद्य पदं स्थिता ।
कुतो जातेयमिति ते राम मास्तु विचारणा ॥५॥ (४।४१।३२)

इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा ।
अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि राघव ॥६॥ (४।४१।३३)

यत एषा यथा चैषा यथा नष्टेत्यखण्डितम् ।
वस्तुतः किल नास्त्येषा विभात्येषा न वेक्षिता ॥७॥(४।४१।३४)

उपदेश्योपदेशार्थं शास्त्रार्थप्रतिपत्तये ।
शब्दार्थवाक्यरचनाभ्रमो मा तन्मयो भव ॥ ८ ॥ (४।४१।६)

शब्दार्थवाक्प्रपञ्चोऽयमुपदेशेषु कल्पितः ।
सदाऽज्ञेषु न तज्ज्ञेषु विद्यते पारमार्थिकः ॥ ९ ॥ (४।४१।९)

कलनामलमोहादि किञ्चिन्नात्मनि विद्यते ।
नीरागं ब्रह्म परमं तदेवेदं जगत्स्थितम् ॥ १० ॥ (४।४१।१०)

## [ ८ ] मूढस्यैव जगत्सत्यत्वम् :—

यस्त्वबुद्धमतिर्मूढो रूढो न वितते पदे ।

वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥ १ ॥ ( ३।४२।१ )
यथा बालस्य वेतालो मृतिपर्यन्तदुःखदः ।
असदेव सदाकारं तथा मूढमतेर्जगत् ॥ २ ॥ ( ३।४२।२ )
ताप एव यथा वारि मृगाणां भ्रमकारणम् ।
असत्यमेव सत्याभं तथा मूढमतेर्जगत् ॥ ३ ॥ ( ३।४२।३ )
यथा स्वप्नमृतिर्जन्तोरसत्या सत्यरूपिणी ।
अर्थक्रियाकरी भाति तथा मूढधियां जगत् ॥ ४ ॥ (३।४२।४)
अव्युत्पन्नस्य कनके कानके कटके यथा ।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ ५ ॥ ( ३।४२।५ )
तथाऽज्ञस्य पुरागारनगनागेन्द्रभासुरा ।
इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक् ॥ ६ ॥ ( ३।४२।६ )
येन बुद्धं तु तस्यैतदाकाशादपि शून्यकम् ।
न बुद्धं येन तस्यैतद्वज्रसाराचलोपमम् ॥ ७ ॥ ( ३।२८।१३ )
दीर्घसंसारमायेयं राम राजसतामसैः ।
धार्यते जन्तुभिर्नित्यं सुस्तम्भैरिव मण्डपः ॥ ८ ॥ ( ५।५।२ )
सत्वस्थजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः ।
हेलया त्यज्यते पक्का मायेयं त्वगिवोरगैः ॥ ९ ॥ ( ५।५।३ )

[ ९ ] यावदज्ञानं तावदेव जगदनुभवः :—

यावदज्ञानकलना यावदब्रह्मभावना ।
यावदास्था जगज्जाले तावच्चित्तादिकल्पना ॥ १ ॥ (६।२।३०)

देहे यावदहंभावो दृश्येऽस्मिन्यावदात्मता ।
यावन्ममेदमित्यास्था तावच्चित्तादिविभ्रमः ॥ २ ॥ ( ६।२।३१ )

यावन्नोदितमुच्चैस्त्वं सज्जनासङ्गसङ्गतः ।
यावन्मौर्ख्यं न संक्षीणं तावच्चित्तादिनिम्नता ॥ ३ ॥ (६।२।३२)

यावच्छिथिलतां यातं नेदं भुवनभावनम् ।
सम्यग्दर्शनशक्त्यान्तस्तावच्चित्तादयः स्फुटाः ॥४॥ (६।२।३३)

यावदज्ञत्वमन्धत्वं वैवश्यं विषयाशया ।
मौर्ख्यान्मोहसमुच्छ्रायस्तावच्चित्तादिकल्पना ॥ ५ ॥ (६।२।३४)

यावदाशाविषामोदः परिस्फुरति हृद्वने ।
अविचारचकोरोऽन्तर्न तावत्प्रविशत्यलम् ॥ ६ ॥ ( ६।२।३५ )

## [ १० ] अविद्याया बोधाद्विलयः :—

अविद्यैवमविज्ञाता चिरानन्तावभासते ।
परिज्ञाता तु नास्त्येव मृगतृष्णानदी यथा ॥ १ ॥ (६।१६०।८)

यथोदिते दिनकरे क्वापि याति तमस्विनी ।
तथा विवेकेऽभ्युदिते क्वाप्यविद्या विलीयते ॥२॥ (३।११४।९)

यदा ब्रह्मात्मिकैवेयमविद्या नेतरात्मिका ।
तदास्त्येषाऽपरिज्ञाता परिज्ञाता न भिद्यते ॥ ३ ॥ (६।१६०।१२)

एवमालोक्यमानैषा क्वापि याति पलायते ।
असद्रूपा ह्यवस्तुत्वाद्दृश्यते ह्यविचारणात् ॥४॥ (६।१०।३६)

[ ११ ] जगद्भ्रमक्षयः :–

भोगेष्वनास्थमनसः शीतलामलनिर्वृतेः ।
छिन्नाशापाशजालस्य चीयते चित्तविभ्रमः ॥ १ ॥ (६।२।३६)
तृष्णामोहपरित्यागान्नित्यशीतलसंविदः ।
पुंसः प्रशान्तचित्तस्य प्रबुद्धा त्यक्तचित्तभूः ॥ २ ॥ (६।२।३७)
भावितानन्तचित्तत्वरूपरूपान्तरात्मनः ।
स्वान्तावलीनजगतः शान्तो जीवादिविभ्रमः ॥३॥ (६।२।३९)
असम्यग्दर्शने शान्ते मिथ्याभ्रमकरात्मनि ।
उदिते परमादित्ये परमार्थैकदर्शने ॥ ४ ॥ ( ६।२।४० )
अपुनर्दर्शनायैव दग्धसंशुष्कपर्णवत् ।
चित्तं विगलितं विद्धि वह्नौ घृतलवं यथा ॥ ५ ॥ ( ६।२।४१ )
आब्रह्मकीटसंवित्तेः सम्यक्संवेदनात्क्षयः ॥६॥ (३।६७।६८)

[ १२ ] अविद्याविलये नाशशब्दो न युज्यते:–

यदस्ति नाम तत्रैव नाशानाशक्रमो भवेत् ।
वस्तुतो यच्च नास्त्येव नाशः स्यात्तस्य कीदृशः॥१॥(३।२१।५८)
रज्ज्वां सर्पभ्रमे नष्टे सत्यबोधवशात्सुत ।
सर्पो न नष्ट उन्नष्टो वेत्येवं कैव सा कथा ॥ २ ॥ (३।२१।५९)
न विनश्यत एवेदं ततः पुत्र न विद्यते ।
नासतो विद्यते भावो नाभावो विद्यते सतः॥३॥(६।२१३।११)

यत्तु वस्तुत एवास्ति न कदाचन किञ्चन ।
तदभावात्म तद्राम कथं नाम विनश्यति ॥ ४ ॥ (६।२१३।१२)

[ १३ ] जगदात्मनि लीयते :—

स्वप्नभ्रमेऽथ सङ्कल्पे पदार्थाः पर्वतादयः ।
संविदोऽन्तर्मिलन्त्येते स्पन्दनान्यनिले यथा॥१॥ (३।५७।४४)
अस्पन्दस्य यथा वायोः सस्पन्दोऽन्तर्विशत्यलम् ।
अनन्यात्मा तथैवायं स्वप्नार्थः संविदो मलम्॥२॥ (३।५७।४५)
स्वप्नाद्यर्थावभासेन संविदेव स्फुरत्यलम् ।
अस्फुरन्ती तु तेनैव यात्येकत्वं तदात्मिका ॥३॥ (३।५७।४६)



## १५—परा दृष्टिः ( अजातवादः )

जगच्छब्दस्य नामार्थो ननु नास्त्येव कश्चन । ( ३।४।६७ )
वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् ॥ १ ॥ (४।४०।३०)

### [ १ ] अप्रबुद्धबोधायैव भेदकल्पना :—

अप्रबुद्धदृशां पक्षे तत्प्रबोधाय केवलम् ।
वाच्यवाचकसम्बन्धकृतो भेदः प्रकल्प्यते ॥१॥ ( ३।१००।४ )
अविद्येयमयं जीव इत्यादिकलनाक्रमः ।
अप्रबुद्धप्रबोधाय कल्पितो वाग्विदां वरैः ॥ २ ॥ (६/१।४९।१७)
काचिद्वा कलना यावन्न नीता राघव प्रथाम् ।
उपदेश्योपदेशश्रीस्तावल्लोके न शोभते ॥ ३ ॥ ( ३।९५।५ )
अतो भेददृशादीनामङ्गीकृत्योपदिश्यते ।
ब्रह्मेदमेते जीवा वै वेति वाचमयं क्रमः ॥ ४ ॥ ( ३।९५।६ )
अप्रबुद्धजनाचारो यत्र राघव दृश्यते ।
तत्र ब्रह्मण उत्पन्ना जीवा इत्युक्तयः स्थिताः ॥५॥ (३।९५।३)
उपदेशाय शास्त्रेषु जातः शब्दोऽथवाऽर्थजः ।
प्रतियोगिव्यवच्छेदसंख्यालक्षणपक्षवान् ॥ ६ ॥ (३।८४।१९)
भेदो दृश्यत एवायं व्यवहारान्न वास्तवः ।
वेतालो बालकस्येव कार्यार्थं परिकल्पितः ॥ ७ ॥ (३।८४।२०)

कार्यकारणभावो हि तथा स्वस्वामिलक्षणम् ।
हेतुश्च हेतुमांश्चैवान्वयव्यायविविक्रमः ॥ ८ ॥ ( ३।८४।२२ )
व्यतिरेकाव्यतिरेकौ परिणामादिविभ्रमः ।
तथा भावविलासादि विद्याविद्ये सुखासुखे ॥९॥ (३।८४।२३)
एवमादिमयी मिथ्यासङ्कल्पकलना मिता ।
अज्ञानमवबोधार्थं न तु भेदोऽस्ति वस्तुनि ॥१०॥ (३।८४।२४)

[ २ ] परमः सिद्धान्तः :—

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥१॥ (६।१२५।१)
सर्वं च खल्विदं ब्रह्म नित्यं चिद्घनमक्षतम् ।
कल्पनान्या मनोनाम्नी विद्यते नहि काचन ॥२॥(३।११४।१४)
परं ब्रह्मैव तत्सर्वमजरामरमव्ययम् । ( ३।४।६८ )
सर्वमेकमनाद्यन्तमविभागमखण्डितम् ॥ ३ ॥ ( ३।८४।२६ )
केवलं केवलाभासं सर्वसामान्यमक्षतम् ।
चेत्यानुपातरहितं चिन्मात्रमिह विद्यते ॥ ४ ॥ ( ३।११४।१६ )
चेत्यानुपातरहितं सामान्येन च सर्वगम् ।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः ॥५॥ (३।११४।१२)
तस्मान्नैवाविचारोऽस्ति नाऽविद्यास्ति न बन्धनम् ।
न मोक्षोऽस्ति निराबाधं शुद्धबोधमिदं जगत् ॥६॥(३।२१।७२)
बुधानामस्मदादीनां न किंचिन्नाम जायते ।
न च नश्यति वा किञ्चित्सर्वं शान्तमजं च सत्॥७॥(६।१४६।११)

परे शान्ते परं नाम स्थितमित्थमिदन्तया ।
नेह सर्गो न सर्गाख्या काचिदस्ति कदाचन ॥८॥ (३।११९।२५)
न जायते न म्रियते किंचिदत्र जगत्त्रये ।
न च भावविकाराणां सत्ता क्वचन विद्यते ॥९॥ (३।११४।१५)
न जगन्नापि जगती शान्तमेवाखिलं स्थितम् ।
ब्रह्मैव कचति स्वच्छमित्थमात्मात्मनात्मनि ॥१०॥ (३।१३।५१)
नाधेयं तत्र नाधारो न दृश्यं न च द्रष्टृता ।
ब्रह्माण्डं नास्ति न ब्रह्मा न च वैतण्डिका क्वचित् ११ (३।१३।५०)
तेन जातं ततो जातमितीयं रचना गिराम् ।
शास्त्रसंव्यवहारार्थं न राम परमार्थतः ॥ १२ ॥ (४।४०।१७)
न दृश्यमस्ति सद्रूपं न द्रष्टा न च दर्शनम् ।
न शून्यं न जडं नो चिच्छान्तमेवेदमाततम् ॥१३॥ (३।४।७०)
जाग्रत्स्वप्नसुषुप्तादि परमार्थविदां विदाम् ।
न विद्यते किञ्चिदपि यथास्थितमवस्थितम्॥१४॥ (६।१४६।२१)
वस्तुतस्त्वस्ति न स्वप्नो न जाग्रन्न सुषुप्तता ।
न तुर्यं न ततोऽतीतं सर्वं शान्तं परं नभः ॥१५॥ (६।१६७।१८)

[ २ ] ब्रह्मणः कर्तृत्वनिषेधः :—

अनाख्योऽप्रतिघः स्वात्मा निराकारो य ईश्वरः ।
स करोति जगदिति हासायैव वचोऽधियाम् ॥१॥ (६।९८।८)
नेदं कर्तृकृतं किंचिन्न वा कर्तृकृतक्रमम् ।
स्वयमाभासते चेदं कर्त्रकर्तृपदं गतम् ॥ २ ॥ ( ४।५६।५ )

अकर्तृकर्मकरणमकारणमबीजकम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्म कर्तृ कथं भवेत् ॥ ३ ॥ ( ६।१९५।१३ )

[४] ब्रह्मणो विकारनिषेधः :—

अपुनः प्रागवस्थानं यत्स्वरूपविपर्ययः ।
तद्विकारादिकं तात यत्क्षीरादिषु वर्तते ॥ १ ॥ ( ६।४९।२ )
पयस्तां पुनरभ्येति दधित्वान्न पुनः पयः ।
बुद्धमाद्यन्तमध्येषु ब्रह्म ब्रह्मैव निर्मलम् ॥ २ ॥ ( ६।४९।३)
क्षीरादेरिव तेनास्ति ब्रह्मणो न विकारिता ।
अनाद्यन्तविभागस्य न चैषोऽव्ययविक्रमः ॥ ३ ॥ (६।४९।४)
आत्मा त्वाद्यन्तमध्येषु समः सर्वत्र सर्वदा ।
स्वमप्यन्यत्वमायाति नात्मतत्त्वं कदाचन ॥ ४ ॥ (६।४९।८)
अरूपत्वात्तथैकत्वान्नित्यत्वादयमीश्वरः ।
वशं भावविकाराणां न कदाचन गच्छति ॥ ५ ॥ (६।४९।९)
न चाविकारमजरं सविकारं त्वयादृते ।
कारणं क्वचिदेवेह किंचिद्भवितुमर्हति ॥६॥ ( ६।१९५।१४ )
न जन्यजनकाद्यास्ताः सम्भवन्त्युक्तयः परे ।
एकमेव ह्यनन्तत्वात्किं कथं जनयिष्यति ॥ ७ ॥ (४।४०।२६)
सर्वस्मात्सर्वगात्तस्मादनन्ताद्ब्रह्मणः पदात् ।
नान्यत्किञ्चित्संभवति तदुत्थं यत्तदेव तत् ॥ ८ ॥ (४।४०।३४)
यादृगाद्यन्तयोर्वस्तु तादृगेव तदुच्यते ।
मध्ये यस्य यदन्यत्वं तदबोधाद्विजृम्भितम् ॥ ९ ॥ (६।४९।७)

समस्याद्यन्तयोर्येयं दृश्यते विकृतिः क्षणात् ।
संविदः सम्भ्रमं विध्दि नाऽविकारेऽस्ति विक्रिया॥१०॥(६।४६।५)

[५] ब्रह्मणः कारणत्वनिषेधः :—

नित्यानन्दतयाऽजस्य कारणं नास्ति कार्यकृत् । (६।१०।१०)
स्वसत्तायां स्थितं ब्रह्म न बीजं न च कारणम् ॥१॥ (६।६७।२)
संस्थितं सर्वदा सर्वं सर्वाकारमिवोदितम् ।
अदृश्यत्वादलभ्यत्वान्न तत्कार्यं न कारणम् ॥२॥ (६।६६।२६)
आख्यानाख्यास्वरूपस्य निराभासप्रभादृशः ।
सतो वाप्यसतो वाथ कथं कारणता भवेत् ॥३॥ (६।६६।२८)
यदि कारणतापत्तियोग्यं शान्तं पदं भवेत् । (६।६७।८)
अनिङ्गितमनाभासमप्रतर्क्यं कथं भवेत् ॥ ४ ॥ (६।६७।६)
न च शून्यमनाद्यन्तं जगतः कारणं भवेत् ।
ब्रह्मामूर्तं समूर्तस्य दृश्यस्याब्रह्मरूपिणः ॥ ५ ॥ (६।५३।१७)
न चाविकारमजरं सविकारं क्षयादृते ।
कारणं क्वचिदेवेह किञ्चिद्भवितुमर्हति ॥ ६ ॥ (६।१६५।१४)
न हि कारणतः कार्यमुदेत्यसदृशं क्वचित् । (३।१८।१८)
ज्ञानस्य ज्ञेयता नास्ति केवलं ज्ञानमव्ययम् ॥७॥ (६।१६०।५)
सम्पद्यते हि यत्कार्यं कारणैः सहकारिभिः ।
मुख्यकारणवैचित्र्यं किञ्चित्तत्रावलोक्यते ॥ ८ ॥ (३।१८।२०)
न ब्रह्मजगतामस्ति कार्यकारणतोदयः ।
कारणानामभावेन सर्वेषां सहकारिणाम् ॥ ९ ॥ (३।२१।३७)

[६] ब्रह्मणो बीजत्वनिषेधः :—

इदं बीजेऽङ्कुर इव दृश्यमास्ते महाशये ।
ब्रूते य एवमज्ञत्वमेतत्तस्यास्ति शैशवम् ॥ १ ॥ ( ४।१।२१ )

मनःषष्ठेन्द्रियातीतं यत्स्यादतितरामणु ।
बीजं तद्भवितं शक्तं स्वयंभूर्जगतां कथम् ॥ २ ॥ ( ४।१।२५ )

आकाशादपि सूक्ष्मस्य परस्य परमात्मनः ।
सर्वाख्यानुपलंभस्य कीदृशी बीजता कथम् ॥ ३ ॥ (४।१।२६)

गगनाङ्गादपि स्वच्छे शून्ये तत्र परे पदे ।
कथं सन्ति जगन्मेरुसमुद्रगगनादयः ॥ ४ ॥ ( ४।१।२८ )

मेरुरास्ते कथमणौ कुतः किञ्चिदनाकृतौ ।
तदतद्रूपयोरैक्यं क्व च्छायातपयोरिव ॥ ५ ॥ ( ४।१।३२ )

साकारवटधानादावङ्कुराः सन्ति युक्तिमत् ।
नाकारे तन्महाकारं जगदस्तित्ययुक्तिकम् ॥ ६ ॥ ४।१।३३ )

यत्तु परं शान्तं ब्रह्म का तत्राकारकल्पना ।
परमाणुत्वयोगेऽपि नात्र केवात्र बीजता ॥ ७ ॥ (६।५४।२२)

जगदास्ते परस्याणोरन्तरित्यपि नोचितम् ।
सार्षपे कणके मेरुरास्त इत्यज्ञकल्पना ॥ ८ ॥ ( ६।५४।२४ )

सति बीजे प्रवर्तन्ते कार्यकारणदृष्टयः ।
निराकारस्य किं बीजं क्व जन्यजनकक्रमः ॥९॥ (६।५४।२५)

यत्रास्ति बीजं तत्र स्याच्छाखा विततरूपिणी ।
जन्यते कारणैः सा च वितता सहकारिभिः ॥१०॥(६।५४।२०)

सहकारिकारणानामभावे त्वङ्कुरोद्गतिः ।
वन्ध्याकन्येव दृष्टेह न कदाचन केनचित् ॥ ११ ॥ (४।२।३)
समस्तभूतप्रलये बीजमाकारि किं भवेत् ।
सहकार्यथ किं तस्य जायते यद्वशाज्जगत् ॥१२॥ (६।५४।२१)
बीजं जहद्बीजवपुः फलीभूतं विलोक्यते ।
ब्रह्माजहन्निजवपुः फलं बीजे च संस्थितम् ॥१३॥(४।१८।२४)
बीजोदरे तु या सत्ता बीजमेव हि सा भवेत् ।
बीजेऽङ्कुरोऽङ्कुरतया संश्रितो नोपलभ्यते ॥१४॥(६।१६५।३४)
ब्रह्मणोऽन्तर्जगत्तैवं जगत्तैवोपलभ्यते ।
अस्ति चेत्तद्भवेन्नित्यं सा ब्रह्मैवाविकारि तत् ॥१५॥(६।१६५।३५)
अविकारादनाकाराद्विकार्याकृतिभासुरम् ।
उदेतीति किलास्माभिर्नैव दृष्टं न च श्रुतम् ॥१६॥(६।१६५।३६)
अनाकृतावाकृतिमन्न चैतत्स्थातुमर्हति ।
परमाणौ न चैवान्तरिव सम्भान्ति मेरवः ॥१७॥ (६।१६५।३७)
समुद्गके रत्नमिव जगद्ब्रह्मणि तिष्ठति ।
महाकारं निराकारे इत्युन्मत्तवचो भवेत् ॥१८॥ (६।१६५।३८)
शान्तं परं च साकारस्याधार इति राजते ।
न वक्तुं राजते क्वेव साकारस्याविनाशिता ॥१९॥(६।१६५।३९)

[ ७ ] अकारणत्वाज्जगतो विभ्रमत्वम् :—

कारणं यस्य कार्यस्य भूमिपाल न विद्यते ।
विद्यते नेह तत्कार्यं तत्संवित्तिस्तु विभ्रमः ॥ १ ॥(६।९४।५४)

अकारणं तु यत्कार्यं सदिवाग्रेऽनुभूयते ।
तद्द्रष्टुर्विभ्रमाद्विध्दि मृगतृष्णाजलोपमम् ॥ २ ॥ (६।६४।५६)
कारणाभावतः कार्यमभूत्वा भवतीति यत् ।
मिथ्याज्ञानादृते तस्य न रूपमुपपद्यते ॥ ३ ॥ (६।६५।५६)
कारणाभावतः कार्यं न कस्यचिदिदं जगत् ।
अकारणत्वादकार्यत्वं भ्रमाद्विद्धि त्विदं जगत् ॥४॥ (६।६५।१७)
कारणेन विना कार्यं किल किं नाम विद्यते ।
यदपुत्रस्य सत्पुत्रदर्शनं स भ्रमो न सत् ॥ ५ ॥ (६।५४।१५)
यस्त्वकारणको भाति न स्वभावो विजृम्भते ।
सर्वरूपेण संकल्पगन्धर्वनगरादिवत् ॥ ६ ॥ (६।५४।१६)
यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् । (३।३।२८)
स्वरूपमजहत्त्वेव राजतेऽर्थविवर्तवत् ॥ ७ ॥ (६।५४।१७)

### [८] स्वप्नवज्जगदाभासः :—

स्वप्ने चिन्मात्रमेवाद्यं स्वयं भाति जगत्तया ।
यथा तथैव सर्गादौ नात्रान्यदुपपद्यते ॥ १ ॥ (६।१७६।५)
तस्मात्स्वप्नवदाभासः संविदात्मनि संस्थितः ।
सर्गादिनानाकृतिना परमात्मा निराकृतिः ॥ २ ॥ (६।१६५।४४)

### [९] जगतोऽजातत्वम् (अजातवादः) :—

न चोत्पन्नं न च ध्वंसि यत्किलादौ न विद्यते ।
उत्पत्तिः कादृशी तस्य नाशशब्दस्य का कथा ॥१॥ (३।११।५)

यथा स्वप्नेऽवनिर्नास्ति स्वानुभूताऽपि कुत्रचित् ।
तथेयं दृश्यता नास्ति स्वानुभूताप्यसन्मयी ॥२॥ (६।१६१।२२)
न किञ्चिदपि सम्पन्नं न च जातं न दृश्यते । ( ३।१३।४० )
न मिथ्यात्वं न सत्यत्वं किमपीदमजं ततम् ॥३॥ (६।१६५।२३)
तत्सर्वं कारणाभावान्न जातं न च विद्यते । ( ६।५३।१५ )
यदकारणकं तस्य सत्ता नेहोपपद्यते ॥ ४ ॥ ( ६।५३।१६ )
यथा सौवर्णकटके दृश्यमानमिदं स्फुटम् ।
कटकत्वं तु नैवास्ति जगत्त्वं न तथा परे ॥ ५ ॥ (३।११।८)
हेम्न्यूर्मिकारूपधरेऽप्यूर्मिकात्वं न विद्यते ।
यथा तथा जगद्रूपे जगन्नास्ति च ब्रह्मणि ॥६॥ (३।२१।३३)
अनुभूतान्यपीमानि जगन्ति व्योमरूपिणि ।
पृथ्व्यादीनि न सन्त्येव स्वप्नसङ्कल्पयोरिव ॥ ७ ॥ (३।१५।६)
पिण्डग्रहो जगत्यस्मिन्विज्ञानाकाशरूपिणि ।
मरुनद्यां जलमिव न सम्भवति कुत्रचित् ॥ ८ ॥ ( ३।१५।७ )
जाग्रत्स्वप्नसुषुप्तादिपरमार्थविदां विदाम् ।
न विद्यते किञ्चिदपि यथास्थितमवस्थितम् ॥९॥ (६।१४६।२१)
स्वप्नसङ्कल्पपुरयोर्नास्त्यपप्यनुभवस्थयोः ।
मनागपि यथा रूपं सर्गादौ जगतस्तथा ॥१०॥ (६।१४६।२२)
जगत्संविदि जातायामपि जातं न किञ्चन । ( ३।१३।४८ )
परमाकाशमाशून्यमच्छमेव व्यवस्थितम् ॥ ११ ॥ (३।१३।४९)
जातशब्दो हि सन्मात्रपर्यायः श्रूयतां कथम् ।
प्रादुर्भावे जनिस्तूक्तः प्रादुर्भावस्य भूर्वपुः ॥१२॥(६।१४६।१६)

सत्तार्थ एव भूः प्रोक्तस्तस्मात्सञ्जातमुच्यते ।
सर्गतो जात इत्युक्ते सन्सर्ग इति शब्दितम् ॥१३॥ (६।१४६।१७)

एवं न किंचिदुत्पन्नं दृश्यं चिज्जगदाद्यपि ।
चिदाकाशे चिदाकाशं केवलं स्वात्मनि स्थितम् ।१४॥(३।२१।२४)

तस्माद्राम जगन्नासीन्न चास्ति न भविष्यति ।
चेतनाकाशमेवाशु कचतीत्थमिवात्मनि ॥ १५ ॥ ( ४।२।८ )

[१०] अयं सिद्धान्तोऽनधिकारिणे न वक्तव्यः :—

अर्धव्युत्पन्नबुद्धेस्तु नैतद्व्यक्तं हि शोभते ।
दृश्यानया भोगदृशा भावयन्नेष नश्यति ॥ १ ॥ (४।३९।२१)

परां दृष्टिं प्रयातस्य भोगेच्छा नाभिजायते ।
सर्वं ब्रह्मेति सिद्धान्तः काले नामास्य युज्यते ॥२॥ (४।३९।२२)

आदौ शमदमप्रायैर्गुणैः शिष्यं विशोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥३॥ (४।३९।२३)

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानरकजालेषु स तेन विनियोजितः ॥ ४ ॥ ( ४।३९।२४ )

प्रबुद्धबुद्धेः प्रक्षीणभोगेच्छस्य निराशिषः ।
नास्त्यविद्यामलमिति युक्तं वक्तुं महात्मनः ॥५॥ (४।३९।२५)



# अथ मोक्षो नाम तृतीयोऽध्यायः

## १—आनन्दः

आनन्दायैव भूतानि यतन्ते यानि कानिचित् ॥१॥(६।१०८।२०)

### [१] भोगानामापातमात्रमधुरत्वम् :—

आपातमात्रमधुरमावश्यकपरिक्षयम् ।
भोगोपभोगमात्रं मे किं नामेदं सुखावहम् ॥ १ ॥ (५।२२।३०)
आपातमधुरारम्भा भङ्गुरा भवहेतवः ।
अचिरेण विकारिण्यो भीषणा भोगभूमयः ॥ २ ॥ (६।६।८)

### [२] सुखानां दुःखरूपत्वम् :—

सर्वस्या एव पर्यन्ते सुखाशायाश्च संस्थितम् । (४।५६।६)
मालिन्यं दुःखमप्येवं ज्वालाया इव कज्जलम् ॥१॥ (४।५६।७)
सतोऽसत्ता स्थिता मूर्ध्नि मूर्ध्नि रम्येष्वरम्यता ।
सुखेषु मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् ॥२॥ (५।६।४१)
रम्येष्वरम्यता दृष्टा स्थिरेष्वस्थिरतापि च ।
सत्येष्वसत्यतार्थेषु तेनेह विरसा वयम् ॥ ३ ॥ ( ६।६३।६१ )
विषया विषवैषम्या वामाः कामविमोहदाः ।
रसाः सरसवैरस्या लुठन्त्येषु न को हतः ॥४॥ ( ६।६३।३६ )
आपदः सम्पदः सर्वाः सुखं दुःखाय केवलम् ।

जीवितं मरणायैव वत मायाविजृम्भितम् ॥ ५ ॥ (६।९३।७३)
भोगा विषयसम्भोगा भोगा एव फणावताम् ।
दशयन्त्येव मनाक्स्पृष्टा दृष्टा नष्टाः प्रतिक्षणम् ॥६॥ (६।९३।७५)
सम्पदः प्रमदाश्चैव तरङ्गोत्सङ्गभङ्गुराः ।
कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः ॥७॥ (६।९३।७८)
शरदम्बुधरच्छायागत्वर्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ ८ ॥ (६।९३।८४)
संसार एव दुःखानां सीमान्त इति कथ्यते ।
तन्मध्ये पतिते देहे सुखमासाद्यते कथम् ॥ ९ ॥ ( ५।९।५२ )

[३] संसारस्यासारत्वम् :—

पातः पक्वफलस्येव मरणं दुर्निवारणम् । ( ६।७८।३ )
आयुर्गलत्यविरतं जलं करतलादिव ॥ १ ॥ ( ६।७८।४ )
शैलनद्या रय इव सम्प्रयात्येव यौवनम् । ( ६।७८।५ )
इन्द्रजालमिवासत्यं जीवनं जीर्णसंस्थिति ॥२॥ ( ६।७८।६ )
सुखानि प्रपलायन्ते शरा इव धनुश्च्युताः । ( ६।७८।६ )
पतन्ति चेतो दुःखानि तृष्णा गृध्र इवामिषम् ॥३॥ (६।७८।७)
बुद्बुदः प्रावृषीवाप्सु शरीरं क्षणभङ्गुरम् । ( ६।७८।७ )
रम्भागर्भ इवासारो व्यवहारो विचारगः ॥४॥ ( ६।७८।८ )
सत्वरं युवता याति कान्तेवाप्रियकामिनः । ( ६।७८।८ )
बलादरतिरायाता वैरस्यमिव पादपम् ॥ ५ ॥ ( ६।७८।९ )

[४] अभ्युदयस्य निःसारत्वम् :—

रम्ये धनेऽथ दारादौ हर्षस्यावसरो हि कः ।
वृद्धायां मृगतृष्णायां किमानन्दो जलार्थिनाम् ॥१॥ (४।४६।३)
धनदारेषु वृद्धेषु दुःखं युक्तं न तुष्टयः ।
वृद्धायां मोहमायायां कः समाश्वासवानिह ॥२॥ ( ४।४६।४ )

[५] सुखहेतुनिरूपणम् :—

यथा प्राप्तिक्षणे वस्तु प्रथमे तुष्टये तथा ।
न प्राप्त्येकक्षणादूर्ध्वमिति को नानुभूतवान् ॥१॥ (६/१।४४।२)
वाञ्छाकाले यथा वस्तु तुष्टये नान्यदा तथा । ( ६/१।४४।३ )
वाञ्छाकाले तुष्टये यत्तत्र वाञ्छैव कारणम् ॥२॥ (६/१।४४।४)
बद्धवासनमर्थो यः सेव्यते सुखयत्यसौ ।
यत्सुखाय तदेवाशु वस्तु दुःखाय नाशतः ॥३॥ (६/१।१२०।१८)
अविनाभावनिष्ठत्वं प्रसिद्धं सुखदुःखयोः ।
तनुवासनमर्थो यः सेव्यते वा विवासनम् ॥४॥ (६/१।१२०।१९)
नासौ सुखायते नासौ नाशकाले न दुःखदः । (६/१।१२०।२०)
यत्सुखं दुःखमेवाहुः क्षणनाशानुभूतिभिः ॥५॥ (६/२।६८।३१)
अकृत्रिममनाद्यन्तं यत्सुखं तत्सुखं विदुः ॥ ६ ॥ (६/२।६८।३१)
इच्छोदयो यथा दुःखमिच्छाशान्तिर्यथा सुखम् ।
तथा न नरके नापि ब्रह्मलोकेऽनुभूयते ॥ ७ ॥ (६/२।३६।२४)
यत्र नाभ्युदितं चित्तं तत्सुखमकृत्रिमम् ।

न स्वर्गादौ सम्भवति मरौ हिमगृहं यथा ॥ ८ ॥ (६।४४।२६)
चित्तोपशमजं स्फारमवाच्यं वचसा सुखम् ।
क्षयातिशयनिर्मुक्तं नोदेति न च शाम्यति ॥९॥ (६।४४।२७)
आशापरिकरे राम नूनं परिहृते हृदा ।
पुमानागतसौन्दर्यो ह्लादमायाति चन्द्रवत् ॥१०॥ (५।७४।२४)
न तथा सुखयत्यङ्गसंलग्ना वरवर्णिनी ।
यथा सुखयति स्वान्तमिन्दुशीता निराशता ॥११॥ (५।७४।४०)
अपि राज्यादपि स्वर्गादपीन्दोरपि माधवात् ।
अपि कान्तासमासङ्गान्नैराश्यं परमं सुखम् ॥१२॥(५।७४।४४)
इदमेवास्त्विदं मास्तु ममेति हृदि रञ्जना ।
न यस्यास्ति तमात्मेशं तोलयन्ति कथं जनः ॥१३॥ (५।७४।५०)

## [६] आत्मानन्दः–

क्षणं वर्षसहस्रं वा तत्र लब्ध्वा स्थितिं मनः ।
रतिमेति न भोगौघे दृष्टस्वर्ग इवावनौ ॥ १ ॥ (५।५४।६९)
तत्पदं सा गतिः शान्ता तच्छ्रेयः शाश्वतं शिवम् ।
तत्र विश्रान्तिमाप्तस्य भूयो नो बाधते भ्रमः ॥२॥ (५।५४।७०)
तां महानन्दपदवीं चित्तादासाद्य देहिनः ।
दृश्यं न बहु मन्यन्ते राजानो दानतामिव ॥३॥ (५।५४।७२)



## २—बन्धमोक्षौ

### [ १ ] बन्धस्य स्वरूपम् :—

पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते । (२।२।५)
सुखदुःखैर्युतो योऽसौ स्वयं बन्धानुभूतिमान् ॥१॥(६।१२५।३४)
उपादेयानुपतनं हेयैकान्तविवर्जनम् ।
यदेतन्मनसो राम तद्बन्धं विद्धि नेतरत् ॥ २ ॥ (५।१३।२०)
द्रष्टुर्दृश्यस्य सत्ताङ्ग बन्ध इत्यभिधीयते । (३।१।२२)
वासनावासने एव कारणं बन्धमोक्षयोः ॥३॥ (६।१२५।६१)
जगत्त्वमहमित्यादिर्मिथ्यात्मा दृश्यमुच्यते ।
यावदेतत्संभवति तावन्मोक्षो न विद्यते ॥ ४ ॥ (३।१।२३)

### [ २ ] बन्धकारणानि :—

#### (अ) वासना :—

वासनातन्तुबद्धा ये आशापाशवशीकृताः ।
वश्यतां यान्ति ते लोके रज्जुबद्धाः खगा इव ॥१॥(४।२७।१८)
ये भिन्नवासना धीराः सर्वत्रासक्तबुद्धयः ।
न हृष्यन्ति न कुप्यन्ति दुर्जयास्ते महाधियः ॥२॥ (४।२७।१९)
कोशकारवदात्मानं वासनातनुतन्तुभिः ।
वेष्टयच्चैव चेतोऽन्तर्बालत्वान्नावबुध्यते ॥ ३ ॥ (६।१०।८)

(आ) इयत्ता :—

इयन्मात्रपरिच्छिन्नो येनात्मा भव्यभावितः ।
स सर्वज्ञोऽपि सर्वत्र परां कृपणतां गतः ॥ ४ ॥ (४।२७।२२)
अनन्तस्याप्रमेयस्य येनेयत्ता प्रकल्पिता ।
आत्मनस्तस्य तेनात्मा स्वात्मनैवावशीकृताः ॥५॥ (४।२७।२३)
आस्थामात्रमनन्तानां दुःखानामाकरं विदुः ।
अनास्थामात्रमभितः सुखानामाकरं विदुः ॥ ६ ॥ (४।२७।२५)
अयं सोहं ममेदं तदित्याकल्पितकल्पनः ।
आपदां पात्रतामेति पयसामिव सागरः ॥ ७ ॥ (४।२७।२१)

(इ) मिथ्याभावना :—

मिथ्याभावनया ब्रह्मन्स्वविकल्पकलङ्किताः ।
न ब्रह्म वयमित्यन्तर्निश्चयेन ह्यधोगताः ॥ ८ ॥ (४।१२।२)
ब्रह्मणो व्यतिरिक्तत्वं ब्रह्मार्णवगता अपि ।
भावयन्त्यो विमुह्यन्ति भीमासु भवभूमिषु ॥ ९ ॥ (४।१२।३)

(ई) आत्मविस्मरणम् :—

हेतुर्विहरणे तेषामात्मविस्मरणादृते ।
न कश्चिल्लभ्यते साधो जन्मान्तरफलप्रदः ॥१०॥ (३।९५।१४)
नाहं ब्रह्मेति संकल्पात्सुदृढाद्बध्यते मनः ॥११॥ (३।११४।२३)

(उ) अहंभावना :—

अहमित्येव संकल्पो बन्धायातिविनाशिने ।
नाहमित्येव संकल्पो मोक्षाय विमलात्मने ॥१२॥ (६।६६।११)

(ऊ) अज्ञानम् :—

जडो देहो न दुःखार्हो दुःखी देह्यविचारतः ।
अविचारो घनाज्ञानादज्ञानं दुःखकारणम् ॥१३॥ (३।११५।१६)
अपरिज्ञात आत्मैव भ्रमतां समुपागतः ।
ज्ञात आत्मत्वमायाति सीमान्तः सर्वसंविदाम् ॥१४॥ (६।१०।४)

[ २ ] मोक्षस्वरूपम् :—

सकलाशास्वसंसक्त्या यत्स्वयं चेतसः क्षयः ।
स मोक्षनाम्ना कथितस्तत्त्वज्ञैरात्मदर्शिभिः ॥१॥ (५।७३।३६)
जगद्भ्रमं परिज्ञाय यदवासनमासितम् ।
विरसाशेषविषयं तद्धि निर्वाणमुच्यते ॥ २ ॥ (६।४२।५१)
दीपनिर्वाणनिर्वाणमस्तंगतमनोगतिम् ।
आत्मन्येव शमं यातं सन्तमेवामलं विदुः ॥ ३ ॥ (६।३८।३२)
यत्तु चञ्चलताहीनं तन्मनो मृतमुच्यते ।
तदेव च तपःशास्त्रसिद्धान्तो मोक्ष उच्यते ॥ ४ ॥ (३।११२।८)
परस्य पुंसः संकल्पमयत्वं चित्तमुच्यते ।
अचित्तत्वमसंकल्पान्मोक्षस्तेनाभिजायते ॥ ५ ॥ (५।१३।८०)

दृश्यं विरसतां यातं यदा न स्वदते क्वचित् ।
तदा नेच्छा प्रसरति तदैव च विमुक्तता ॥ ६ ॥ (६।३७।३३)
अत्यन्तविस्मृतं विश्वं मोक्ष इत्यभिधीयते ।
ईप्सितानीप्सिते तत्र न स्तः केचन कस्यचित् ॥७॥ (३।२१।११)
अज्ञानस्य महाग्रन्थेर्मिथ्यावेद्यात्मनोऽसतः ।
अहमित्यर्थरूपस्य भेदो मोक्ष इति स्मृतः ॥ ८ ॥ (६।२०।१७)

[ ४ ] कदा मोक्षोऽनुभूयते :—

यदा ब्रह्मगुणैर्जीवो युक्तस्त्यक्त्वा मनोगुणान् । (६।१२८।४५)
संशान्तकरणग्रामस्तदा स्यात्सर्वगः प्रभुः ॥१॥ (६।१२८।४६)
देहेन्द्रियमनोबुद्धेः परस्तस्माच्च यः परः । (६।१२८।४६)
सोऽहमस्मि यदा ध्यायेत्तदा जीवो विमुच्यते ॥२॥ (६।१२८।४७)
सर्वेषु भूतेषु चात्मानं सर्वभूतानि चात्मनि । (६।१२८।४८)
यदा पश्यत्यभेदेन तदा जीवो विमुच्यते ॥३॥ (६।१२८।४९)
कर्तृभोक्त्रादिनिर्मुक्तः सर्वोपाधिविवर्जितः । (६।१८।४७)
सुखदुःखविनिर्मुक्तस्तदानीं विप्रमुच्यते ॥४॥ (६।१२८।४९)
जाग्रत्स्वप्नसुषुप्ताख्यं हित्वा स्थानत्रयं यदा । (६।१२८।४९)
विशेत्तुरीयमानन्दं तदा जीवो विमुच्यते ॥ ५ ॥ (६।१२८।५०)
यदि सर्वं परित्यज्य तिष्ठस्युत्क्रान्तवासनः ।
अमुनैव निमेषेण तन्मुक्तोऽसि न संशयः ॥ ६ ॥ (३।६६।१९)
यत्राभिलाषस्तन्नूनं संत्यज्य स्थीयते यदि ।
प्राप्त एवाङ्ग तन्मोक्षः किमेतावति दुष्करम् ॥७॥ (३।६६।२१)

[ ५ ] द्विविधो मोक्षः :–

द्विविधा मुक्तता लोके संभवत्यनघाकृते ।
सदेहैका विदेहान्या विभागोऽयं तयोः शृणु ॥ १ ॥ (५।४२।११)

( अ ) सदेहः :–

असंसक्तमतेर्यस्य त्यागादानेषु कर्मणाम् ।
नैषणा तत्स्थितिं विद्धि त्वं जीवन्मुक्ततामिह ॥१॥ (५।४२।१२)

( आ ) विदेहः :–

सैव देहक्षये राम पुनर्जननवर्जिता ।
विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम् ॥२॥(५।४२।१३)

[ ६ ] तयोरभेदः :–

न मनागपि भेदोऽस्ति सदेहादेहमुक्तयोः ।
सस्पन्दोऽप्यथवाऽस्पन्दो वायुरेव यथानिलः ॥ १ ॥ (२।४।५)

[ ७ ] स्थावरत्वमोक्षयोर्भेदः :–

चिच्छक्तिर्वासनाबीजरूपिणी स्वापधर्मिणी ।
स्थिता रसतया नित्यं स्थावरादिषु वस्तुषु ॥१॥ (६।१०।२३)

यथा बीजेषु पुष्पादि मृदो राशौ घटो यथा ।
तथाऽन्तः संस्थिता साधो स्थावरेषु स्ववासना ॥२॥ (६।१०।१९)
यत्रास्ति वासनाबीजं तत्सुषुप्तं न सिद्धये ।
निर्बीजा वासना यत्र तत्तुर्यं सिद्धिदं स्मृतम् ॥३॥ (६।१०।२०)
अन्तः सुप्ता स्थिता मन्दा यत्र बीज इवाङ्कुरः ।
वासना तत्सुषुप्तत्वं विद्धि जन्मप्रदं पुनः ॥ ४ ॥ (६।१०।१६)
स्थावरादय एते हि समस्ता जडधर्मिणः ।
सुषुप्तपदमारूढा जन्मयोग्याः पुनः पुनः ॥ ५ ॥ (६।१०।१८)
वासनायास्तथा वह्नेर्ऋणव्याधिद्विषामपि ।
स्नेहवैरविषाणां यः शेषः स्वल्पोऽपि बाधते ॥६॥ (६।१०।२१)
अन्तः संलीनमननं परितः सुप्तवासनम् ।
सुषुप्तं जडधर्मापि जन्म दुःखशतप्रदम् ॥ ७ ॥ (६।१०।१७)
तत्र दूरस्थिता मुक्तिर्मन्ये वेदविदां वर ।
सुप्तपुर्यष्टका यत्र चित्स्थिता दुःखदायिनी ॥८॥ (६।१०।११)
निर्दग्धवासनाबीजसत्तासामान्यरूपवान् ।
सदेहो वा विदेहो वा न भूयो दुःखभाग्भवेत् ॥९॥ (६।१०।२२)
बुद्धिपूर्वं विचार्येदं यथावस्त्ववलोकनात् ।
सत्तासामान्यबोधो यः स मोक्षश्चेदनन्तकः ॥१०॥ (६।१०।१३)
परिज्ञाय परित्यागो वासनानां य उत्तमः ।
सत्तासामान्यरूपत्वं तत्कैवल्यपदं विदुः ॥ ११ ॥ (६।१०।१४)
विचार्यार्यैः सहालोक्य शास्त्राण्यध्यात्मभावनात् ।
सत्तासामान्यनिष्ठत्वं यत्तद्ब्रह्म परं विदुः ॥१२॥ (६।१०।१५)

## [ ८ ] बन्धमोक्षयोर्मिथ्यात्वम् :—

मिथ्याकाल्पनिकीवेयं मूर्खाणां वन्धकल्पना ।
मिथ्यैवाभ्युदिता तेषामितरा मोक्षकल्पना ॥ १ ॥ (३।१००।३९)

एवमज्ञानकादेव वन्धमोक्षदृशोऽस्मृतेः ।
वस्तुतस्तु न वन्धोऽस्ति न मोक्षोऽस्ति महामते॥२॥(३।१००।४०)

वन्धमोक्षादिसंमोहो न प्राज्ञस्यास्ति कश्चन ।
संमोहवन्धमोक्षादि ह्यज्ञस्यैवास्ति राघव ॥३॥ (३।१००।४२)

नित्यासंभववन्धस्य वद्धोऽस्मीति कुकल्पना ।
यस्य काल्पनिकस्तस्य मोक्षो मिथ्या न तत्त्वतः॥४॥(३।१००।३७)



## ३—मोक्षोपायः

### [ १ ] न ज्ञानेतर उपायः :—

संसारोत्तरणे तत्र न हेतुर्वनवासिता ।
नापि स्वदेशावासित्वं न च कष्टतपःक्रिया: ॥१॥(६।१९९।३०)
न क्रियायाः परित्यागो न क्रियायाः समाश्रयः ।
नाचारेषु समारम्भविचित्रफलपालयः ॥ २ ॥ (६।१९९।३१)
न तीर्थेन न दानेन न स्नानेन न विद्यया ।
न ध्यानेन न योगेन न तपोभिर्न चाध्वरैः ॥३॥ (६।१७४।२४)
न दैवं नच कर्माणि न धनानि न वान्धवाः । (५।१३।८)
किञ्चिन्नोपकरोत्यत्र तपोदानव्रतादिकम् ॥ ४ ॥ (३।६।४)
न शास्त्रान्न गुरोर्वाक्यान्न दानान्नेश्वरार्चनात् । (६।१९७।१८)
तपस्तीर्थादिना स्वर्गाः प्राप्यन्ते न तु मुक्तता ॥५॥ (६।१७४।२६)
ततो वच्मि महावाहो यथा ज्ञानेतरा गतिः ।
नास्ति संसारतरणे पाशवन्धस्य चेतसः ॥ ६ ॥ (५।६७।२)

### [२] ज्ञानमेवोपायः :—

ज्ञानयुक्तिप्लवेनैव संसाराब्धि सुदुस्तरम् ।
महाधियः समुत्तीर्णा निमेषेण रघूद्वह ॥ १ ॥ (२।११।३६)
अत्र ज्ञानमनुष्ठानं न त्वन्यदुपयुज्यते । (३।६।२)
ज्ञानादेव परा सिद्धिर्न त्वनुष्ठानदुःखतः ॥ २ ॥ (३।६।१)

बहुकालमियं रूढा मिथ्याज्ञानविषूचिका ।
जगन्नाम्न्यविचाराख्या विना ज्ञानं न शाम्यति ॥३॥ (३।८।२)
अयं स देव इत्येव संपरिज्ञानमात्रतः ।
जन्तोर्न जायते दुःखं जीवन्मुक्तत्वमेति च ॥ ४ ॥ (३।६।६)
ज्ञानेन सर्वदुःखानां विनाश उपजायते । ( ५।६३।१८ )
ज्ञानवानुदितानन्दो न क्वचित्परिमज्जति ॥ ५ ॥ ( ५।६३।२४ )
ज्ञानवानेव सुखवान्ज्ञानवानेव जीवति ।
ज्ञानवानेव बलवान्स्तस्माज्ज्ञानमयो भव ॥ ६ ॥ ( ५।६२।४६ )
ज्ञानान्निर्दुःखतामेति ज्ञानादज्ञानसंक्षयः ।
ज्ञानादेव परा सिद्धिर्नान्यस्माद्राम वस्तुतः ॥ ७ ॥ ( ५।८८।१२ )
ज्ञायते परमात्मा चेद्राम दुःखस्य संततिः ।
क्षयमेति विषावेशशान्ताविव विषूचिका ॥ ८ ॥ ( ३।७।१७ )
दुरुत्तरा या विपदो दुःखकल्लोलसंकुलाः ।
तीर्यते प्रज्ञया ताभ्यो नावाऽपद्भ्यो महामते ॥ ९ ॥ ( ५।१२।२० )
कलना सर्वजन्तूनां विज्ञानेन शमेन च ।
प्रबुद्धा ब्रह्मतामेति भ्रमतीतरथा जगत् ॥ १० ॥ (५।१३।६८)

## [ ३ ] मोक्षप्राप्तौ भक्तेरनावश्यकता :—

### ( अ ) आत्मदेवेतरो देवो नाराधनीयः :—

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मात्मना न चेत्त्रातस्तदुपायोऽस्ति नेतरः ॥ १ ॥ (६।१६२।१८)

अभ्यासवैराग्ययुतादाक्रान्तेन्द्रियपन्नगात् ।
नात्मनः प्राप्यते यत्तत्प्राप्यते न जगत्त्रयात् ॥ २ ( ५।४३।१८ )
आराधयात्मनात्मानमात्मनात्मानमर्चयेत् ।
आत्मनात्मानमालोक्य संतिष्ठस्वात्मनात्मनि ॥३॥ (५।४३।१८)
सर्वेषामुत्तमस्थानां सर्वासां चिरसंपदाम् ।
स्वमनोनिग्रहो भूमिर्भूमिः सस्यश्रियामिव ॥४॥ ( ५।४३।३५ )
शास्त्रयत्नविचारेभ्यो मूर्खाणां प्रपलायिनाम् ।
कल्पिता वैष्णवी भक्तिः प्रवृत्त्यर्थं शुभस्थितौ ॥५॥ (५।४३।२०)
क्रियते माधवादीनां प्रणयप्रार्थना स्वयम् ।
तथैव क्रियते कस्मान्न स्वकस्यैव चेतसः ॥६॥ ( ५।४३।२५ )
सर्वस्यैव जनस्यास्य विष्णुरभ्यन्तरे स्थितः ।
तं परित्यज्य ये यान्ति वहिर्विष्णुं नराधमाः ॥७॥ (५।४३।२६)
वरमाप्नोति यो वापि विष्णोरमिततेजसः ।
तेन स्वस्यैव तत्प्राप्तं फलमभ्यासशाखिनः ॥८॥ (५।४३।३४ )

(आ) कोऽपि देवोऽविचारवन्तं ज्ञानं दातुं न समर्थः :—

रामापर्यवसानेयं माया संसृतिनामिका ।
आत्मचिज्जयेनैव क्षयमायाति नान्यथा ॥ ९ ॥ ( ५।४४।१ )
चिरमाराधितोप्येष परमप्रीतिमानपि ।
नाविचारवतो ज्ञानं दातुं शक्नोति माधवः ॥१०॥ (५।४३।१०)
यद्यदासाद्यते किञ्चित्केनचित्क्वचिदेव हि ।
स्वशक्तिसंप्रवृत्त्या तल्लभ्यते नान्यतः क्वचित् ॥११॥(५।४३।१३)

न हरेर्न गुरोर्नार्थात्किञ्चिदासाद्यते महत्
आक्रान्तमनसः स्वस्माद्यदासादितमात्मनः॥ १२ ॥ (५।४३।१७)
गुरुश्चेदुद्धरत्यज्ञमात्मीयात्पौरुषादृते ।
उष्ट्रं दान्तं बलीवर्दं तत्कस्मान्नोद्धरत्यसौ ॥१३॥ (५।४३।१६)

( इ ) ईश्वरः सर्वस्यान्तरेव वर्तते :—

य एष देवः कथितो नैष दूरेऽवतिष्ठते ।
शरीरे संस्थितो नित्यं चिन्मात्रमिति विश्रुतः ॥१४॥ (३।७।२)
चिन्मात्रमेष शशिभृच्चिन्मात्रं गरुडेश्वरः ।
चिन्मात्रमेव तपनश्चिन्मात्रं कमलोद्भवः ॥ १५ ॥ ( ३।७।४ )
न ह्येष दूरे नाभ्याशे नालभ्यो विषमे न च ।
स्वानन्दाभासरूपोऽसौ स्वदेहादेव लभ्यते ॥१६॥ ( ३।६।३ )
संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः ॥१७॥ (५।८।१४)

( ई ) ज्ञानादेवेश्वरप्राप्तिः :—

अस्य देवाधिदेवस्य परस्य परमात्मनः ।
ज्ञानादेव परा सिद्धिर्नत्वनुष्ठानदुःखतः ॥ १८ ॥ ( ३।६।१ )
विना तेनेतरेणायमात्मा लभ्यत एव नो । ( ६।३८।३० )
अत्र ज्ञानमनुष्ठानं न त्वन्यदुपयुज्यते ॥१६॥ ( ३।६।२ )

## (उ) आत्मदेवपूजनविधिः :—

अव्युत्पन्नधियो ये हि बालपेलवचेतसः ।
कृत्रिमार्चामयं तेषां देवार्चनमुदाहृतम् ॥ २० ॥ ( ६।३०।५ )
संवेदनात्मकतया गतया सर्वगोचरम् ।
न तस्याह्वानमंत्रादि किञ्चिदेवोपयुज्यते ॥ २१ ॥ ( ६।३५।२४ )
न दीपेन न धूपेन न पुष्पविभवार्पणैः ।
नान्नदानादिदानेन न चन्दनविलेपनैः ॥२२॥ (६।३८।२३)
न च कुंकुमकर्पूरभोगैश्चित्रैर्न चेतरैः ।
नित्यमक्लेशलभ्येन शीतलेनाऽविनाशिना ॥२३॥ (६।३८।२४)
एकेनैवाऽमृतेनैष बोधेन स्वेन पूज्यते ।
एतदेव परं ध्यानं पूजैषैव परा स्मृता ॥ २४ ॥ ( ६।३८।२५ )
नित्यमेव शरीरस्थमिमं ध्यायेत्परं शिवम् । ( ६।३९।३ )
ऐषोऽसौ परमो योग एषा सा परमा क्रिया ॥२५॥ (६।३८।३६)
शमबोधादिभिः पुष्पैर्देव आत्मा यदर्च्यते ।
तत्तु देवार्चनं विद्धि नाकारार्चनमर्चनम् ॥२६॥ (६।२९।१२८)
पूजनं ध्यानमेवान्तर्नान्यदस्त्यस्य पूजनम् । ( ६।३८।६ )
स्वसंविदात्मा देवोऽयं नोपहारेण पूज्यते ॥२७॥ (६।३८।२२)
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।( ६।३८।२६ )
प्रलपन्विसृजन्गृह्णन्शुद्धसंविन्मयो भवेत् ॥२८॥ ( ६।३८।२७ )
ध्यानामृतेन सम्पूज्य स्वयमात्मानमीश्वरम् । ( ६।३८।२७ )
ध्यानोपहार एवात्मा ध्यानं ह्यस्य समीहितम् ॥२९॥ (६।३८।२८)

ध्यानमर्घ्यं च पाद्यं च शुद्धसंवेदनात्मकम् ।
ध्यानसंवेदनं पुष्पं सर्वं ध्यानपरं विदुः ॥३०॥ (६।३८।२६)
विना तेनेतरेणायमात्मा लभ्यत एव नो ।
ध्यानात्प्रसादमायान्ति सर्वभोगसुखश्रियः ॥३१॥ (६।३८।३०)

## ( ऊ ) ज्ञानिनां देवार्चनम् :—

यथाप्राप्तेन सर्वेण तमर्चयति वस्तुना ।
समया सर्वया बुद्ध्या चिन्मात्रं देवचित्परम् ॥३२॥ (६।३६।३०)
यथाप्राप्तक्रमोत्थेन सर्वार्थेन समर्चयेत् ।
मनागपि न कर्तव्यो यत्नोऽत्रापूर्ववस्तुनि ॥ ३३ ॥ (६।३६।३१)
प्राप्तदेहतया नित्यं यथार्थक्रियथाऽनया ।
कामसंसेवनेनाथ पूजयेच्छोभनं विभुम् ॥ ३४ ॥ (६।३६।३२ )
भक्ष्यभोज्यान्नपानेन नानाविभवशालिना ।
शयनासनयानेन यथाप्राप्तेनार्चयेच्छिवम् ॥३५॥ (६।३६।३३)
कान्तान्नपानसंभोगसंभारादिविलासिना ।
सुखेन सर्वरूपेण सम्बुद्ध्याऽऽत्मानमर्चयेत् ॥३६॥ (६।३६।३४)
आधिव्याधिप्रीतेन मोहसंरम्भशालिना ।
सर्वोपद्रवदुःखेन प्राप्तेनात्मानमर्चयेत् ॥ ३७ ॥ ( ६।३६।३५)
दारिद्र्येणाथ राज्येन प्रवाहपतितात्मना ।
विचित्रचेष्टापुष्पेण शुद्धात्मानं समर्चयेत् ॥ ३८ ॥ (६।३६।३७)
रागद्वेषविलासेन शुद्धात्मानं समर्चयेत् । (६।३६।३८ )
मैत्र्या माधुर्यधर्मिण्या हृत्स्थमात्मानमर्चयेत् ॥३९॥(६।३६।३९)

उपेक्षया करुणया सदा मुदितया हृदि ।
शुद्धया शक्तिपद्धत्या वोधेनात्मानमर्चयेत् ॥ ४० ॥ (६।३९।४०)
आकस्मिकोपयातेन स्थितेनानियतेन च ।
भोगाभोगैकभोगेन प्राप्तेनात्मानमर्चयेत् ॥ ४१॥ ( ६।२९।४१ )
भोगानामनिषिद्धानां निषिद्धानां च सर्वदा ।
त्यागेन वीतरागेण स्वात्मानं शुद्धमर्चयेत् ॥४२॥( ६।३९।४२ )
ईहितानीहितौघेन युक्तायुक्तमयात्मना । ( ६।३९।४३ )
निर्विकारतयैतद्धि परमार्चनमात्मनः ॥ ४३ ॥ ( ६।३९।४४ )
सर्वदैव समग्रासु चेष्टानिष्टासु दृष्टिषु ।
परमं साम्यमाधाय नित्यात्मार्चाव्रतं चरेत् ॥४४॥ (६।३९।४५)
त्यक्तेनाप्तेन चार्थेन ह्यर्थानामीशमर्चयेत् । ( ६।३९।४३ )
नष्टं नष्टमुपेक्षेत प्राप्तं प्राप्तमुपाहरेत् ॥ ४५ ॥ ( ६।३९।४५ )
आपातरमणीयं यद्यच्चापातसुदुःसहम् ।
तत्सर्वं सुसमं बुद्ध्वा नित्यात्मार्चाव्रतं चरेत् ॥ (६।३९।४७ )
अयं सोऽहमयं नाहं विभागमिति सन्त्यजेत् ।
सर्वं ब्रह्मेति निश्चित्य शुद्धात्मानं समर्चयेत् ॥४७॥ (६।३९।४९)
सर्वदा सर्वरूपेण सर्वाकारविकारिणा ।
सर्वं सर्वप्रकारेण प्राप्तेनात्मानमर्चयेत् ॥ ४८ ॥ (६।३९।४९)
अनीहितं परित्यज्य परित्यज्य तथेहितम् ।
उभयाश्रयेणापि नित्यमात्मानमर्चयेत् ॥ ४९ ॥ (६।३९।५०)
देशकालक्रियायोगाद्यदुपैति शुभाशुभम् ।
अविकारं गृहीतेन तेनैवात्मानमर्चयेत् ॥ ५० ॥ ( ६।३९।५३)

(ए) बाह्यदेवार्चनस्य गौणत्वम् :—

हृद्गुहावासिचित्तत्त्वं मुख्यं सानातनं वपुः ।
शंखचक्रगदाहस्तो गौण आकार आत्मनः ॥ ५१ ॥ (५।४३।२७)
यो हि मुख्यं परित्यज्य गौणं समनुधावति ।
त्यक्त्वा रसायनं सिद्धं साध्यं संसाधयत्यसौ ॥५२॥(५।४३।२८)
मुख्यः पुरुषयत्नोत्थो विचारः स्वात्मदर्शने ।
गौणो वरादिको हेतुर्मुख्यहेतुपरो भव ॥ ५३ ॥ (५।४३।११)
अभ्यासयत्नौ प्रथमं मुख्यो विधिरुदाहृतः ।
तदभावे तु गौणः स्यात्पूज्यपूजामयक्रमः ॥५४॥ (५।४३।२१)
अप्राप्तात्मविवेकोऽन्तरङ्गचित्तवशीकृतः ।
शंखचक्रगदापाणिमर्चयेत्पमेश्वरम् ॥ ५५ ॥ ( ५।४३।४० )
तत्पूजनेन कष्टेन तपसा तस्य राघव ।
काले निर्मलतामेति चित्तं वैराग्यकारिणा ॥५६॥ (५।४३।३)
नित्याभ्यासविवेकाभ्यां चित्तमाशु प्रसीदति ।
आम्र एव दशामेति साहकारीं शनैः शनैः ॥५७॥ (५।४३।३२)
एवतप्यात्मनैवात्मा फलमाप्नोति भाषितम् ।
हरिपूजाक्रमाख्येन निमित्तेनारिसूदन ॥ ५८ ॥ (५।४३।३३)

[४] आजीवनं कर्मत्यागो न युज्यते तस्मात्कर्मत्यागोऽपि न मोक्षे कारणम् :—

कर्मैव पुरुषो राम पुरुषस्यैव कर्मता ।

एतेह्यभिन्ने विद्धि त्वं यथा तुहिनशीतते ॥ १ ॥ (६।२८।८)

मनागपि न भेदोऽस्ति संवित्स्पन्दमयात्मनोः ।
कल्पनांशादृते राम सृष्टौ पुरुषकर्मणोः ॥ २ ॥ ( ६।२८।९ )

अस्य राघव सूक्ष्मस्य कर्मणो वेदनात्मनः ।
कस्त्यागः किमनुष्ठानं यावद्देहमिति स्थितम् ॥३॥ ( ६।२।३१ )

एतच्चेतनमेवान्तर्विकसत्युद्भवभ्रमैः ।
वासनेच्छामनःकर्मसङ्कल्पाद्यभिधात्मभिः ॥ ४ ॥ (६।२।३४)

प्रबुद्धस्याप्रबुद्धस्य देहिनो देहगेहके ।
आदेहं विद्यते चित्तं त्यागस्तस्य न विद्यते ॥ ५ ॥ (६।२।३५)

जीवतां तस्य संत्यागः कथं नामोपपद्यते । ( ६।२।३६ )
त्यागो हि कर्मणां तस्मादादेहं नोपपद्यते ॥ ६ ॥ ( ६।२।४२ )

मूलं स्वकर्मणः संविन्मनसो वासनात्मनः । ( ६।२।४३ )
सा चादेहं समुच्छेत्तुमृते बोधान्न शक्यते ॥ ७ ॥ ( ६।२।४४ )

कुर्वतोऽकुर्वतो वापि स्वर्गेऽपि नरकेऽपि वा ।
यादृग्वासनमेतत्स्यान्मनस्तदनुभूयते ॥ ८ ॥ ( ४।३८।४ )

तस्मादज्ञाततत्त्वानां पुंसां कुर्वतामकुर्वतां च
कर्तृता न तु ज्ञाततत्त्वानामवासनत्वात् ॥ ९ ॥ ( ४।३८।५ )

राजन्यावदयं देहस्तावन्मुक्तधियामपि ।
यथाप्राप्तक्रियात्यागो रोचते न स्वभावतः ॥१०॥ (५।७६।१६)

यावदायुरिदं राम निश्चितं स्पन्दते तनुः ।
तद्यथाप्राप्तमव्यग्रं स्पन्दतामपरेण किम् ॥ ११ ॥( ६।१९९।५ )

## [ ५ ] सम्यग्ज्ञानस्वरूपम्—

अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
इत्येको निश्चयः स्फारः सम्यग्ज्ञानं विदुर्बुधाः ॥१॥ (५।७६।२)
इमा घटपटाकाराः पदार्थशतपंक्तयः ।
आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ॥२॥ (५।७६।३)
ज्ञानस्य ज्ञेयता नास्ति केवलं ज्ञानमव्ययम् ।
अवाच्यमिति बोधोऽन्तः सम्यग्ज्ञानमिति स्मृतम् ॥३॥(६।१९०।५)

## [ ६ ] स्वपौरुषविचाराभ्यामेवात्मज्ञानं जायते :—

स्वपौरुषप्रयत्नेन विवेकेन विकासिना ।
स देवो ज्ञायते राम न तपःस्नानकर्मभिः ॥ १ ॥ ( ३।६।६ )
दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया। ( ६।११८।४ )
सर्वदा सर्वथा सर्वं स प्रत्यक्षोऽनुभूतितः ॥२॥ (५।७३।१५)
सुन्दर्या निजया बुद्धया प्रज्ञयेव वयस्यया ।
पदमासाद्यते राम न नाम क्रिययान्यया ॥ ३ ॥ (५।१२।१८)
स्वयमेव विचारेण विचार्यात्मानमात्मना ।
यावन्नाधिगतं ज्ञेयं न तावदधिगम्यते ॥ ४ ॥ ( ५।५।६ )
स्वयमालोक्य प्राज्ञ संसारारम्भदृष्टिषु ।
किं सत्यं किमसत्यं वा भव सत्यपरायणः ॥ ५ ॥ (५।५।८)
विचारेणावदातेन पश्यत्यात्मानमात्मना । ( ५।५।१७ )
संसारमननं चित्रं विचारेण विलीयते ॥ ६ ॥ ( ५।१३।१३ )

[ ७ ] विचारार्थं चित्तशुद्धिरपेक्षिता :—

शास्त्रसज्जनसत्कार्यसङ्गेनोपहतैनसाम् ।
सारावलोकिनी बुद्धिर्जायते दीपकोपमा ॥ १ ॥ ( ५।५।५ )
पूर्वं राघव शास्त्रेण वैराग्येण परेण च ।
तथा सज्जनसंगेन नीयतां पुण्यतां मनः ॥ २ ॥ ( ५।५।१४ )
वैराग्येणाथ शास्त्रेण महत्त्वादिगुणैरपि ।
यत्नेनापद्विघातार्थं स्वयमेवोन्नयेन्मनः ॥ ३ ॥ ( ५।२१।११ )

[ ८ ] विचारविषयाः :—

कोऽहं कथमिदं किंवा कथं मरणजन्मनी ।
विचारयान्तरेवं त्वं महत्तामलमेष्यसि ॥ १ ॥ ( ५।५८।३२ )
येषु येषु पदार्थेषु धृतिं वध्नाति मानवः ।
तेषु तेष्वेव तस्यायं दृष्टो नाशोदयो भृशम् ॥ २ ॥ (५।६।३४)
आगमापायि विरसं दशावैषम्यदूषितम् ।
आसारसारं संसारं किं तत्पश्यति दुर्मतिः ॥ ३ ॥ (५।६।३७)
सुखदुःखानुभावित्वमात्मनीत्यवबुध्यते ।
असत्यमेव गगने विन्दुताम्लानते यथा ॥ ४ ॥ ( ५।५।२३ )
सुखदुःखे न देहस्य सर्वातीतस्य नात्मनः ।
एते ह्यज्ञानकस्यैव तस्मिन्नष्टे न कस्य चित् ॥ ५ ॥ (५।५।२४)
मिश्रीभूतमिवानेन देहेनोपहतात्मना ।
व्यक्तीकृत्य स्वमात्मानं स्वस्थो भवत मा चिरम् ॥ ६ ॥ (५।५।२४)

## [ ९ ] अविद्ययैवाविद्यानाशः :–

यो मुमुक्षुरविद्यांशः केवलो नाम सात्विकः ।
सात्विकैरेव सोऽविद्याभागैः शास्त्रादिनामभिः ॥१॥(६।४१।५)
अविद्यां श्रेष्ठयाऽश्रेष्ठां क्षालयन्निह तिष्ठति ।
मलं मलेनापहरन्युक्तिज्ञो रजको यथा ॥ २ ॥ ( ६।४२।६ )
काकतालीयवत्पश्चादविद्याक्षय आगते ।
प्रपश्यत्यात्मनैवात्मा विचारयति चात्मना ॥ ३ ॥ (६।४१।७)
पश्यत्यात्मानमात्मैव विचारयति चात्मना ।
आत्मैवेहास्ति नाविद्या इत्यविद्याक्षयं विदुः ॥४॥ (६।४१।१०)

## [ १० ] ज्ञानप्राप्तौ शास्त्रस्योपयोगः :–

वर्गत्रयोपदेशो हि शास्त्रादिष्वस्ति राघव ।
ब्रह्मप्राप्तिस्त्ववाच्यत्वान्नास्ति तच्छासनेष्वपि ॥१॥ (६।१९७।१५)
केवलं सर्ववाक्यार्थैर्ध्वन्यमानात्रगम्यते ।
कालश्रीः प्रसवेनेव स्वयं स्वानुभवेन सा ॥२॥ (६।१९७।१६)
सर्वार्थातिगतं शास्त्रे विद्यते ब्रह्मवेदनम् ।
सर्वगातिगतं स्वच्छं लावण्यमिव योषिति ॥३॥ (६।१९७।१७)
न शास्त्रान्न गुरोर्वाक्यान्न दानान्नेश्वरार्चनात् ।
एष सर्वपदातीतो बोधः सम्प्राप्यते परः ॥४॥ (६।१९७।१८)
एतान्यकरणान्येव कारणत्वं गतान्यलम् ।
परमात्मैकविश्रान्तौ यथा राघव तच्छृणु ॥५॥ ( ६।१९७।१९)

शास्त्रादभ्यासयोगेन चित्तं यातं विशुद्धताम् ।
अनिच्छदेवमेवाशु पदं पश्यति पावनम् ॥६॥ (६।१९७।२०)
एतच्छास्त्रादविद्यायाः सात्त्विको भाग उच्यते ।
तामसः सात्त्विकेनास्या भागेनायाति संक्षयम् ७ (६।१९७।२१)
नूनं मलं प्रधानेन क्षालयच्छास्त्ररूपिणा ।
पुरुषः शुद्धतामेति परमां वस्तुशक्तितः ॥ ८ ॥ (६।१९७।२२)
मुमुक्षुशास्त्रयोरेवं मिथः सम्बन्धमात्रतः ।
सर्वसंवित्पदातीतमात्मज्ञानं प्रवर्तते ॥ ९ ॥ ( ६।१९७।२५ )
लोष्टेन लोष्टं सलिले क्षालयन्बालको यथा ।
क्षयेण लोष्टयोर्हस्तनैर्मल्यं लभते परम् ॥ १० ॥(६।१९७।२७)
तथा शास्त्रविकल्पौघैर्विकल्पांश्चेतनाद्बुधः ।
क्षालयन्स्वविचारेण परमां याति शुद्धताम् ॥११॥(६।१९७।२८)
महावाक्यार्थनिष्यन्दं स्वात्मज्ञानमवाप्यते ।
शास्त्रादेरिक्षुरसतः स्वाद्विव स्वानुभूतितः ॥१२॥ (६।१९७।२९)
शास्त्रार्थैर्बुध्यते नात्मा गुरोर्वचनतो न च ।
बुध्यते स्वयमेवैष स्वबोधवशतस्ततः ॥ १३ ॥ ( ६।४१।१५ )
गुरूपदेशशास्त्रार्थैर्विना चात्मा न बुध्यते ।
एतत्संयोगसत्तैव स्वात्मज्ञानप्रकाशिनी ॥ १४ ॥ (६।४१।१६)



## ४—ज्ञानसिद्धिः

### [ १ ] ज्ञानबन्धुः :—

अज्ञातारं वरं मन्ये न पुनर्ज्ञानबन्धुताम् । ( ६।२१।१ )
व्याचष्टे यः पठति शास्त्रं भोगाय शिल्पिवत् ॥ १ ॥ ( ६।२१।२ )
यतते न त्वनुष्ठाने ज्ञानबन्धुः स उच्यते । ( ६।२१।३ )
कर्मस्पन्देषु नो बोधः फलितो यस्य दृश्यते ॥२॥ (६।२१।४)
वासनाशनमात्रेण तुष्टाः शास्त्रफलानि ये ।
जानन्ति ज्ञानबन्धूंस्तान्विद्याच्छास्त्रार्थशिल्पिनः ॥३॥ (६।२१।५)
प्रवृत्तिलक्षणे धर्मे वर्तते यः श्रुतोचिते ।
अदूरवर्तिज्ञानत्वाज्ज्ञानबन्धुः स उच्यते ॥ ४ ॥ ( ६।२१।६ )
आत्मज्ञानं विदुर्ज्ञानं ज्ञानान्यन्यानि यानि तु ।
तानि ज्ञानावभासनानि सारस्यानवबोधनात् ॥५॥ (६।२१।७)
आत्मज्ञानमनासाद्य ज्ञानान्तरलवेन ये ।
सन्तुष्टाः कष्टचेष्टं ते ते स्मृता ज्ञानबन्धवः ॥६॥ (६।२१।८)

### [ २ ] ज्ञानी :—

ज्ञानेन ज्ञेयनिष्ठत्वाद्योऽचित्तं चित्तमेव च ।
न बुध्यते कर्मफलं स ज्ञानीत्यभिधीयते ॥ १ ॥ ( ६।२२।१ )

ज्ञात्वा सम्यगनुज्ञानं दृश्यते येन कर्मसु ।
निर्वासनात्मकं ज्ञस्य स ज्ञानीत्यभिधीयते ॥ २ ॥ ( ६।२२।२ )
अन्तःशीतलतेहासु प्राज्ञैर्यस्यावलोक्यते ।
अकृत्रिमैकशान्तस्य स ज्ञानीत्यभिधीयते ॥ ३ ॥ ( ६।२२।३ )
अपुनर्जन्मने यः स्याद्बोधः स ज्ञानशब्दभाक् ।
वसनाशनदा शेषा व्यवस्था शिल्पजीविका ॥ ४ ॥ (६।२२।४)
प्रवाहपतिते कार्ये कामसंकल्पवर्जितः ।
तिष्ठत्याकाशहृदयो यः स पण्डित उच्यते ॥ ५ ॥ ( ६।२२।५ )

## [ ३ ] नाभ्यासेन विना ज्ञानसिद्धिः :—

जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥१॥ (५।९२।२३)
पौनःपुन्येन करणमभ्यास इति कथ्यते । ( ६।६७।४३ )
अभ्यासेन विना साधो नाभ्युदेत्यात्मभावना ॥२॥ (६।१ ।११)
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च तदभ्यासं विदुर्बुधाः ॥ ३ ॥ ( ३।२२।२४ )
उदितौदार्यसौन्दर्यवैराग्यरसरञ्जिता ।
आनन्दस्यन्दिनी येषां मतिस्तेऽभ्यासिनः परे ॥४॥(३।२२।२६)
अत्यन्ताभावसम्पत्तौ ज्ञातृज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिताः५(३।२२।२७)
नाभ्यासेन विना ज्ञाने शिवे विश्रान्तवानसि ।
अभ्यासेन तु कालेन भृशं विश्रान्तिमेष्यसि ॥६॥(६।१५५।१३)

[ ४ ] संसारोत्तरणे युक्तिर्योग इति कथ्यते :—

संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते ।
तां विद्धि द्विप्रकारां त्वं चित्तोपशमधर्मिणीम् ॥१॥ (६।१३।३)
आत्मज्ञानं प्रकारोऽस्या एकः प्रकटितो भुवि ।
द्वितीयः प्राणसंरोधः शृणु योऽयं मयोच्यते ॥२॥ (६।१३।४)
प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि ।
तथापि रूढिमायातः प्राणयुक्तावसौ भृशम् ॥ ३ ॥ (६।१२।६)
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
मम त्वभिमतः साधो सुसाध्यो ज्ञाननिश्चयः ॥४॥ ( ६।१३।८)
द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ ५ ॥ (५।७८।८)
चित्तचित्तपरिस्पन्दपक्षयोरेकसंक्षये ।
स्वयं गुणो गुणी स्थित्वा नश्यतो द्वौ न संशयः॥६॥(५।७८।७)

[५] योगनिष्ठा :—

जीवस्य च तुरीयाख्या स्थितिर्या परमात्मनि ।
अवस्थाबीजनिद्रादिनिर्मुक्ता चित्सुखात्मिका॥१॥(६।१२८।५०)
योगस्य सेयं वा निष्ठा सुखं संवेदनं महत् ॥२॥ (६।१२८।५१)
मनस्यस्तं गते पुंसां तदन्यन्नोपलभ्यते ।
प्रशान्तामृतकल्लोले केवलामृतवारिधौ ॥ ३ ॥ (६।१२८।५२)

### [६] योगाभ्यासत्रयम् :—

एतकतत्त्वघनाभ्यासः प्राणानां विलयस्तथा ।
मनोविनिग्रहश्चेति योगशब्दार्थसंग्रहः ॥ १ ॥ ( ६/१।६९।२७ )
एकस्मिन्नेव संसिद्धे संसिध्यन्ति परस्परम् ।
एकार्थाभ्यासनप्राणरोधचेतःपरिक्षयाः ॥ २ ॥ (६/१।६९।४०)
त्रिष्वेतेषु प्रयोगेषु मनःप्रशमनं वरम् ।
साध्यं विद्धि तदेवाशु यथा भवति तच्छिवम् ॥३॥(६/१।६९।२९)

### [ ७ ] एकतत्त्वघनाभ्यासः :—

एकतत्त्वघनाभ्यासाच्छान्तं शाम्यत्यलं मनः ।
तल्लीनत्वात्स्वभावस्य तेन प्राणोऽपि शाम्यति ॥१॥ (६/१।६९।४८)

#### ( अ ) ब्रह्मभावना :—

विचार्य यदनन्तात्मतत्त्वं तन्मयतां नय ।
मनस्ततस्तल्लयेन तदेव भवति स्थिरम् ॥ २ ॥ ( ६/१।६९।४९ )
प्रत्याहारवतां चेतः स्वयं भोग्यक्षयादिव ।
विलीयते सह प्राणैः परमेवावशिष्यते ॥ ३ ॥ ( ६/१।६९।५२ )
यथैव भावयत्यात्मा सततं भविष्यति स्वयम् ।
तथैवापूर्यते शक्त्या शीघ्रमेव महानपि ॥ ४ ॥ ( ४।११।५९ )
भाविता शक्तिरात्मानमात्मतां नयति क्षणात् ।
अनन्तमखिलं प्रावृड् मिहिका महती यथा ॥५॥ (४।११।६०)

( आ ) पदार्थभावनात्यागः ( अभावभावना ):—

सत्यदृष्टौ प्रपन्नायामसत्ये क्षयमागते ।
निर्विकल्पचिदच्छात्मा स आत्मा समवाप्यते ॥६॥ (४।२१।४३)

भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अत्यन्ताभावसम्बोधे यदि रूढिरलं भवेत् ॥७॥ (३।७।२७)

तज्ज्ञातं ब्रह्मणो रूपं भवेन्नान्येन कर्मणा ।
दृश्यात्यन्ताभावतस्तु ऋते नान्या शुभा गतिः ॥८॥ (३।७।२८)

जगन्नाम्नोऽस्य दृश्यस्य स्वसत्तासम्भवं विना ।
बुध्यते परमं तत्त्वं न कदाचन केनचित् ॥ ९ ॥ ( ३।७।३० )

अत्यन्ताभावसम्पत्तौ द्रष्टृदृश्यदृशां मनः ।
एकध्याने परे रूढे निर्विकल्पसमाधिनि ॥१०॥ (३।२१।७६)

वासनाक्षयबीजेऽस्मिन्किञ्चिदङ्कुरिते हृदि ।
क्रमान्नोदयमेष्यन्ति रागद्वेषादिका दृशः ॥११॥ (३।२१।७७)

संसारसम्भवश्चायं निर्मूलत्वमुपेष्यति ।
निर्विकल्पसमाधानं प्रतिष्ठामलमेष्यति ॥१२॥ ( ३।२१।७८ )

अत्यन्ताभावसम्पत्तिं विनाहन्ताजगत्स्थितेः ।
अनुत्पादमयी ह्येषा नोदेत्येव विमुक्तता ॥१३॥ ( ३।२१।१२ )

अत्यन्ताभावसम्पत्तौ ज्ञातृज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिताः ॥१४॥(३।२२।२७)

सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ।
इदं जगदहं चेति बोधाभ्यास उदाहृतः ॥ १५ ॥ (३।२२।२८)

दृश्यासम्भववोधो हि ज्ञानं ज्ञेयं च कथ्यते ।
तदभ्यासेन निर्वाणमित्यभ्यासो महोदयः ॥१६॥ (३।२२।३१)

(इ) केवलीभावः :—

यद्द्रष्टुरस्याद्रष्टृत्वं दृश्याभावे भवेद्बलात् ।
तद्विद्धि केवलीभावं तत एवासतः सतः ॥ १७ ॥ (३।४।५३)
तत्तामुपगते भावे रागद्वेषादिवासनाः ।
शाम्यन्त्यस्पन्दिते वाते स्पन्दनक्षुब्धता यथा॥१८॥ (३।४।५४)
त्रिजगत्त्वमहं चेति दृश्येऽसत्तामुपागते ।
दृष्टुः स्यात्केवलीभावस्तादृशो विमलात्मनः ॥१९॥ (३।४।५६)
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ २० ॥ (३।४।५८)

[८] प्राणस्पन्दनिरोधः :—

तालवृन्तस्य संस्पन्दे शान्ते शान्तो यथानिलः ।
प्राणानिलपरिस्पन्दे शान्ते शान्तं तथा मनः ॥१॥(६।६९।४१)
तस्मिन्संरोधिते नूनमुपशान्तं भवेन्मनः । (५।७८।१५)
मनःस्पन्दोपशान्त्यायं संसारः प्रविलीयते ॥२॥ (५।७८।१६)
प्राणशक्तौ निरुद्धायां मनो राम विलीयते ।
द्रव्यच्छायानु तद्द्रव्यं प्राणरूपं हि मानसम् ॥३॥ (५।१३।८३)

(अ) चित्तसंकल्पितोऽयं सम्बन्धः :—

तेन सङ्कल्पितः प्राणः प्राणो मे गतिरित्यपि ।
न भवामि विनानेन तेन तत्तत्परायणम् ॥ ४ ॥ (६।१३६।२)
एवं यन्मनसाभ्यस्तमुपलब्धं तथैव तत् ।
तेन मे जीवितं प्राणा इति प्राणे मनः स्थितम् ॥५॥ (६।१३६।१०)

(आ) प्राणविद्या :—

सर्वदुःखक्षयकरी सर्वसौभाग्यवर्धिनी । (६।२४।८)
कारणं जीवितस्येह प्राणचिन्ता समाश्रिता ॥ ६ ॥ (६।२४।६)
इडा च पिङ्गला चास्य देहस्य मुनिनायक ।
सुस्थिते कोमले मध्ये पार्श्वकोष्ठे निमीलिते ॥ ७ ॥ (६।२४।२०)
पद्मयुग्मत्रयं यन्त्रमस्थिमांसमयं मृदु ।
ऊर्ध्वाधोनालमन्योन्यमिलत्कोमलसद्दलम् ॥८॥ (६।२४।२१)
सेकेन विकसत्पत्रं सकलाकाशचारिणा ।
चलन्ति तस्य पत्राणि मृदु व्याप्तानि वायुना ॥९॥ (६।२४।२२)
चलत्सु तेषु पत्रेषु स मरुत्परिवर्धते ।
वाताहते लतापत्रजाले वह्निरिवाभितः ॥ १० ॥ (६।२४।२३)
वृद्धिं नीतः स नाडीषु कृत्वा स्थानमनेकधा ।
ऊर्ध्वाधोवर्तमानासु देहेऽस्मिन्प्रसरत्यथ ॥११॥ (६।२४।२४)
प्राणापानसमानाद्यैस्ततः स हृदयानिलः ।
संकेतैः प्रोच्यते तज्ज्ञैर्विचित्राकारचेष्टितैः ॥१२॥ (६।२४।२५)
हृत्पद्मयन्त्रत्रितये समस्ताः प्राणशक्तयः ।

ऊर्ध्वाधः प्रसृता देहे चन्द्रबिम्बादिवांशवः ॥१३॥ (६।२४।२६)
यान्त्यायान्ति विकर्षन्ति हरन्ति विहरन्ति च ।
उत्पतन्ति पतन्त्याशु ता एताः प्राणशक्तयः ॥१४॥ (६।२४।२७)
स एष हृत्पद्मगतः प्राण इत्युच्यते बुधैः ।
अस्य काचिन्मुने शक्तिः प्रस्पन्दयति लोचने॥१५॥(६।२४।२८)
काचित्स्पर्शमुपादत्ते काचिद्वहति नासया ।
काचिदन्नं जरयति काचिद्वक्ति वचांसि च ॥१६॥ (६।२४।२९)
बहुनात्र किमुक्तेन सर्वमेव शरीरके ।
करोति भगवान्वायुर्यन्त्रेहामिव यान्त्रिकः ॥१७॥ (६।२४।३०)
तत्रोर्ध्वाधो द्विसंकेतौ प्रसृतावनिलौ मुने ।
प्राणापानविति ख्यातौ प्रकटौ द्वौ वरानिलौ ॥१८॥(६।२४।३१)
सहस्रविनिकृत्ताङ्गाद्बिसतन्तुलवादपि ।
दुर्लक्ष्या विद्यमानापि गतिः सूक्ष्मतराऽनयोः ॥१९॥(६।२४।३७)
प्राणोऽयमनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे प्राणोऽयमुपरि स्थितः ॥२०॥ (६।२५।३)
अपानोऽप्यनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे त्वपानोऽयमवाक्स्थितः ॥२१॥ (६।२५।४)
प्राणापानगतिं प्राप्य सुस्वस्थः सुखमेधते ।
प्राणस्याभ्युदयो ब्रह्मन्पद्मपत्राद्धृदि स्थितात् ॥२२॥(६।२५।२९)
द्वादशाङ्गुलपर्यन्ते प्राणोऽस्तं यात्ययं बहिः ।
अपानस्योदयो बाह्याद्द्वादशान्तान्महामुने ॥२३॥ (६।२५।३०)
अस्तङ्गतिरथाम्भोजमध्ये हृदयसंस्थिते ।

प्राणो यत्र समायाति द्वादशान्ते नभःपदे ॥२४॥ (६।२५।३१)
पदात्तस्मादपानोऽयं खादेति समनन्तरम् ।
बाह्याकाशोन्मुखो प्राणो वहत्यग्निशिखा यथा॥२५॥(६।२५।३२)
हृदाकाशोन्मुखोऽपानो निम्ने वहति वारिवत् । (६।२५।३३)
अपानशशिनोऽन्तस्था कला प्राणविवस्वता ॥२६॥(६।२५।३६)
यत्र ग्रस्ता तदासाद्य पदं भूयो न शोच्यते ।
प्राणार्कस्य तथाऽन्तस्था यत्रापानसितांशुना॥२७॥ (६।२५।३७)
ग्रस्ता तत्पदमासाद्य न भूयो जन्मभाङ्नरः ।
प्राण एवार्कतां याति सबाह्याभ्यन्तरेऽम्बरे॥२८॥ (६।२५।३८)
आप्यायनकरीं पश्चाच्छक्तितामधितिष्ठति ।
प्राण एवेन्दुतां त्यक्त्वा शरीराप्यायकारिणीम्॥२९॥(६।२५।३९)
क्षणादायाति सूर्यत्वं संशोषणकरं पदम् ।
अर्कतां सम्परित्यज्य न यावच्चन्द्रतां गतः ॥३०॥ (६।२५।४०)
प्राणस्तावद्विचार्यान्तेऽदेशकाले न शोच्यते ।
हृदि चन्द्रार्कयोर्ज्ञात्वा नित्यमस्तमयोदयम् ॥३१॥ (६।२५।४१)
आत्मनो निजमाधारं न भूयो जायते मनः ।
सोदयास्तमयं सेन्दुं सरश्मि सगमागमम् ॥३२॥ ( ६।२५।४२ )
अपानेऽस्तङ्गते प्राणः समुदेति हृदम्बुजात् । (६।२५।४७)
प्राणो त्वस्तङ्गते बाह्यादपानः प्रोदितः क्षणात् ॥३३॥(६।२५।४८)

( इ ) प्राणायामः :—

जाग्रतःस्वपतश्चैव प्राणायामोऽयमुत्तमः ।

प्रवर्तते यतस्तज्ज्ञ तत्तावच्छ्रेयसे शृणु ॥ ३४ ॥ (६।२५।५)
वाह्योन्मुखत्वं प्राणानां यद्धृदम्बुजकोटरात् ।
स्वरसेनास्तयत्नानां तं धीरा रेचकं विदुः ॥३५॥ (६।२५।६)
द्वादशाङ्गुलपर्यन्तं वाह्यमाक्रमतामधः ।
प्राणानामङ्गसंस्पर्शो यः स पूरक उच्यते ॥ ३६ ॥ (६।२५।७)
वाह्यात्परापतत्यन्तरपाने यत्नवर्जितः ।
योऽयं प्रपूरणः स्पर्शो विदुस्तमपि पूरकम् ॥ ३७ ॥ (६।२५।८)
अपानेऽस्तङ्गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ॥ ३८ ॥ (६।२५।९)
रेचकः कुम्भकश्चैव पूरकश्च त्रिधा स्थितः ।
अपानस्योदयस्थाने द्वादशान्तादधो वहिः ॥३९॥ (६।२५।१०)
स्वभावाः सर्वकालस्थाः सम्यग्यत्नविवर्जिताः ।
ये प्रोक्ताः स्फारमतिभिस्ताञ्छृणु त्वं महामते ॥४०॥ (६।२५।११)
द्वादशाङ्गुलपर्यन्ताद्वाह्यादभ्युदितः प्रभो ।
यो वातस्तस्य तत्रैव स्वभावात्पूरकादयः ॥४१॥ (६।२५।१२)
मृदन्तरस्थानिष्पन्नघटवद्या स्थितिर्वहिः ।
द्वादशाङ्गुलपर्यन्ते नासाग्रसमसंमुखे ॥ ४२ ॥ (६।२५।१३)
व्योम्नि नित्यमपानस्य तं विदुः कुम्भकं बुधाः ।
बाह्योन्मुखस्य वायोर्या नासिकाग्रावधिर्गतिः ॥४३॥ (६।२५।१४)
तं बाह्यपूरकं त्वाद्यं विदुर्योगविदो जनाः ।
नासाग्रादपि निर्गत्य द्वादशान्तावधिर्गतिः ॥४४॥ (६।२५।१५)
या वायोस्तं विदुर्धीरा अपरं बाह्यपूरकम् ।

वहिरस्तङ्गते प्राणो यावन्नापान उद्गतः ॥४५॥ ( ६/१।२५।१६ )
तावत्पूर्णां समावस्थं वहिष्ठं कुम्भकं विदुः ।
यत्तदन्तर्मुखत्वं स्यादपानस्योदयं विना ॥४६॥ ( ६/१।२५।१७ )
तं वाह्यरेचकं विद्याच्चिन्त्यमानं विमुक्तिदम् ।
द्वादशान्ताद्यदुत्थाय रूपपीवरता परा ॥ ४७ ॥ ( ६/१।२५।१८ )
अपानस्य वहिष्ठं तमपरं पूरकं विदुः ।
वाह्यानाभ्यन्तरांश्चैतान्कुम्भकादीननारतम् ॥४८॥ (६/१।२५।१९)
प्राणापानस्वभावान्स्तान्बुध्वा भूयो न जायते । ( ६/१।२५।२० )
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा॥४९॥(६/१।२५।२१)
एते निरोधमायान्ति प्रकृत्याऽतिचलानिलाः ।
यत्करोति यदश्नाति बुद्ध्यैवालमनुस्मरन् ॥५०॥ (६/१।२५।२२)
कुम्भकादीन्नरः स्वान्तस्तत्र कर्ता न किञ्चन ।
अव्यग्रमस्मिन्व्यापारे वाह्यं परिजहन्मनः ॥५१॥ (६/१।२५।२३)
दिनैः कतिपयैरेव पदमाप्नोति केवलम् ।
एतदभ्यसतः पुंसो वाह्ये विषयवृत्तिषु ॥५२॥ ( ६/१।२५।२४)
न वध्नाति रतिं चेतः श्वद्दतौ ब्राह्मणो यथा । ( ६/१।२५।२५ )
अस्तङ्गतवति प्राणे त्वपानेऽभ्युदयोन्मुखे ॥५३॥ (६/१।२५।५०)
वहिः कुम्भकमालम्व्य चिरं भूयो न शोच्यते ।
अपानेऽस्तङ्गते प्राणे किञ्चिदभ्युदयोन्मुखे ॥५४॥(६/१।२५।५१)
अन्तःकुम्भकमालम्व्य चिरं भूयो न शोच्यते ।
प्राणरेचकमालम्ब्य अपानाद्दूरकोटिगम् ॥५५॥ (६/१।२५।५२)
स्वच्छं कुम्भकमभ्यस्य न भूयः परितप्यते ।

अपाने रेचकाधारं प्राणपूरान्तरस्थितम् ॥५६॥ (६।२५।५३)
स्वसंस्थं पूरकं दृष्ट्वा न भूयो जायते नरः ।
प्राणापानावुभावन्तर्यत्रैतौ विलयं गतौ ॥ ५७ ॥ (६।२५।१४)
तदालम्ब्य पदं शान्तमात्मानं नानुतप्यते ।
प्राणभक्षोन्मुखेऽपाने देशं कालं च निष्कलम् ॥५८॥(६।२५।५५)
विचार्य वहिरन्तर्वा न भूयः परिशोच्यते ।
अपानभक्षणपरे प्राणे हृदि तथा वहिः ॥५९॥ (६।२५।५६)
देशं कालं च सम्प्रेक्ष्य न भूयो जायते मनः ।
यत्र प्राणो ह्यपानेन प्राणेनापान एव च ॥ ६० ॥ (६।२५।५७)
निगीर्णौ वहिरन्तश्च देशकालौ च पश्य तौ ।
क्षणमस्तं गतप्राणमपानोदयवर्जितम् ॥ ६१ ॥ (६।२५।५८)
अयत्नसिद्धवाह्यस्थं कुम्भकं तत्पदं विदुः ।
अयत्नसिद्धो ह्यन्तस्थकुम्भकः परमं पदम् ॥६२॥ (६।२५।५९)
एतत्तदात्मनो रूपं शुद्धैषा परमैव चित् ।
एतत्तत्सदाभासमेतत्प्राप्य न शोच्यते ॥ ६३ ॥ (६।२५।६०)

## ( ई ) प्राणस्पन्दनिरोधयुक्तयः ।

वैराग्यात्कारणाभ्यासाद्युक्तितो व्यसनक्षयात् ।
परमार्थावबोधाच्च रोध्यन्ते प्राणवायवः ॥ ६४ ॥ (५।१३।८५)
शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ।
अनास्थायां कृतास्थायां पूर्वसंसारवृत्तिषु ॥६५॥ (५।७८।१८)

यथाभिवाञ्छितध्यानाच्चिरमेकतयोदितात् ।
एकतत्त्वघनाभ्यासात्प्राणस्पन्दो निरुद्ध्यते ॥६६॥ (५।७८।१९)
पूरकादिनिजायामाद्दृढाभ्यासादखेदजात् ।
एकान्तध्यानसंयोगात्प्राणस्पन्दो निरुद्ध्यते॥६७॥ (५।७८।२०)
ओङ्कारोच्चारणप्रान्तशब्दतत्त्वानुभवनात् ।
सुषुप्ते संविदो जाते प्राणस्पन्दो निरुद्ध्यते॥६८॥(५।७८।२१)
रेचके नूनमभ्यस्ते प्राणे स्फारे खमागते ।
न स्पृशत्यङ्गरंध्राणि प्राणस्पन्दो निरुद्ध्यते ॥६९॥(५।७८।२२)
पूरके नूनमभ्यस्ते पुराद्गिरिघनस्थिते ।
प्राणे प्रशान्तसञ्चारे प्राणस्पन्दो निरुद्ध्यते॥७०॥(५।७८।२३)
कुम्भके कुम्भवत्कालमनन्तं परितिष्ठति ।
अभ्यासात्स्तंभिते प्राणे प्राणस्पन्दो निरुद्ध्यते॥७१॥(५।७८।२४)
तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घंटिकाम् ।
ऊर्ध्वरन्ध्रगते प्राणे प्राणस्पन्दो निरुद्ध्यते ॥७२॥ (५।७८।२५)
समस्तकलनोन्मुक्ते न किञ्चिन्नाम सूक्ष्मखे ।
ध्यानात्संविदि लीनायां प्राणस्पन्दो निरुद्ध्यते॥७३॥(५।७८।२६)
द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे ।
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुद्ध्यते॥७४॥(५।७८।२७)
भ्रूमध्ये तारकालोकशान्तावन्तमुपागते ।
चेतने केतने बुद्धे प्राणस्पन्दो निरुद्ध्यते॥ ७५ ॥(५।७८।२८)
अभ्यासादूर्ध्वरन्ध्रेण तालूर्ध्वं द्वादशान्तगे ।
प्राणे गलितसंवृत्ते प्राणस्पन्दो निरुद्ध्यते ॥७६॥ (५।७८।२९)

झटित्येवं यदुद्भूतं ज्ञानं तस्मिन्दृढाश्रिते ।
असंश्लिष्टविकल्पांशे प्राणस्पन्दो निरुद्ध्यते ॥७७॥(५।७८।३१)
तस्मात्संविन्मये शुद्धे हृदये हृतवासनः ।
बलान्नियोजिते चित्ते प्राणस्पन्दो निरुद्ध्यते ॥७८॥(५।७८।३८)
एभिः क्रमैस्तथान्यैश्च नानासङ्कल्पकल्पितैः ।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुद्ध्यते ॥७९॥ (५।७८।३९)
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ८० ॥ (५।७८।४६)

[ ९ ] मनोविलयः :—

(अ) मनो नाभिः संसारचक्रस्य :—

चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किञ्चित्प्रबाधते ॥१॥ (५।४९।४०)
तस्मिन्द्रुतमवष्टब्धे धिया पुरुषयत्नतः ।
गृहीतनाभिवहनान्मायाचक्रं निरुद्ध्यते ॥ २ ॥ ( ५।५०।७ )
इदं संसारचक्रं हि नाभौ सङ्कल्पमात्रके । ( ६/१।२९।५ )
संरोधितायां वहनाद्रघुनन्दन रुद्ध्यते ॥ ३ ॥ ( ६/१।२९।६ )
परं पौरुषमास्थाय बलं प्रज्ञां च युक्तितः । ( ६/१।२९।७ )
नाभिं संसारचक्रस्य चित्तमेव निरोधयेत् ॥ ४ ॥ ( ६/१।२९।८ )
मनोनिष्ठतया विश्वमिदं परिणतिं गतम् । ( ५।२४।१४ )

तस्मिञ्जिते जितं सर्वं सर्वमासादितं भवेत् ॥५॥ (५।२४।१५)

चित्तसत्तैव जगत्सत्ता जगत्सत्तैव चित्तकम् ।
एकाभावाद्द्वयोर्नाशः स च सत्यविचारणात् ॥६॥ (४।१७।१९)

चित्तान्तरेव संसारः कुम्भान्तः कुम्भखं यथा ।
चित्तनाशे न संसारः कुम्भनाशे न कुम्भखम्॥७॥ (५।५०।१४)

शान्ते वातपरिस्पन्दे यथा गन्धः प्रशाम्यति ।
तथा शान्ते मनःस्पन्दे शाम्यन्ति प्राणवायवः ॥८॥ (६/१।६९।४४)

चित्ते व्यक्ते लयं याति द्वैतमैक्यं च सर्वतः ।
शिष्यते परमं शान्तमच्छमेकमनामयम् ॥ ९ ॥ ( ६/१।९३।४४ )

अस्याश्चित्तं विदुः क्षेत्रं संसृतेः सस्यसन्ततेः ।
क्षेत्रे त्वक्षेत्रतां याते शालेः क इव सम्भवः ॥१०॥ (६/१।९३।४५)

चित्तमेव विचित्रेहं भावाभावविलासिना ।
विवर्ततेऽर्थभावेन जलमूर्मितया यथा ॥ ११ ॥ ( ६/१।९३।४६ )

चित्तोत्सादनरूपेण सर्वत्यागेन भूपते ।
सर्वमासाद्यते सम्यक्साम्राज्येनेव सर्वदा ॥१२॥ (६/१।९३।४७)

संसारस्यास्य दुःखस्य सर्वोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ॥१३॥ (४।३५।२)

मनोविलयमात्रेण दुःखशान्तिरवाप्यते । ( ३।१११२।९ )
सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ॥ १४॥ (३।१११।१५)

स्वपौरुषैकसाध्येन स्वेप्सिततत्यागरूपिणा ।
मनः प्रशममात्रेण विना नास्ति शुभा गतिः ॥१५॥ (३।१११।१२)

( आ ) चेतसः पीनतावाप्तिः :—

अन्यात्मन्यात्मभावेन देहमात्रास्थयानया ।
पुत्रदारकुटुम्बैश्च चेतो गच्छति पीनताम् ॥१६॥ (५।५०।५७)
अहङ्कारविकारेण ममतामलहेलया ।
इदं ममेति भावेन चेतो गच्छति पीनताम् ॥१७॥ (५।५०।५८)
जरामरणदुःखेन व्यर्थमुन्नतिमीयुषा ।
द्वेषाशीविषकोशेन चेतो गच्छति पीनताम् ॥१८॥ (५।५०।५९)
आधिव्याधिविलासेन समाश्वासेन संसृतेः ।
हेयोपादेयप्रयत्नेन चेतो गच्छति पीनताम् ॥१९॥ (५।५०।६०)
स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ॥२०॥ (५।५०।६१)
दुराशाक्षीरपानेन भोगानिलबलेन च ।
आस्थादानेन चारेण चित्ताहिर्याति पीनताम् ॥२१॥ (५।५०।६२)
आगमापायवपुषा विषवैषम्यशंसिना ।
भोगाभोगेन भीमेन चेतो गच्छति पीनताम् ॥२२॥ (५।५०।६३)

( इ ) मनसो ब्रह्मत्वाप्तिः :—

संयोजितं परे चित्तं शुद्धं निर्वासनं भवेत् ।
ततस्तु कल्पनाशून्यमात्मतां याति राघव ॥२३॥ ( ३।९८।२ )
मन एव विचारेण मन्ये विलयमेष्यति ।
मनोविलयमात्रेण ततः श्रेयो भविष्यति ॥ २४ ॥ (३।९७।१०)

मनोनाम्नि परिक्षीणे कर्मशयाहितसंभ्रमे ।
मुक्त इत्युच्यते जन्तुः पुनर्नाम न जायते ॥२५॥ (३।९७।११)
प्रबुद्धानां मनो राम ब्रह्मैवेह हि नेतरत् ।
जलसामान्यबुद्धीनामब्धेर्नान्यस्तरङ्गकः ॥ २६ ॥ (३।१००।२)
यदा संक्षीयते चित्तमभावात्यन्तभावनात् ।
चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ॥२७॥ (५।५९।२)

( ई ) मनोनिरोधयुक्तयः :—

अङ्कुशेन विना मत्तं यथा दुष्टं मतङ्गजम् । ( ५।९२।३५ )
न शक्यते मनो जेतुं विना युक्तिमनिन्दताम् ॥२८॥ (५।९२।३४)
साधयन्ति समुत्सृज्य युक्तिं ये तान्हठान्विदुः ।
भयाद्भयमुपायान्ति क्लेशात्क्लेशं व्रजन्ति ते॥२९॥(५।९२।४०)
विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् । ( ५।९२।३८ )
ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥३०॥ (५।९२।३९)
अध्यात्मविद्याधिगमः साधुसङ्गम एव च ।
वासनासम्परित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥३१॥(५।९२।३६)
स्वसंविद्यत्नसंरोधाद्यथा चेतः प्रशाम्यति ।
न तथाङ्ग तपस्तीर्थविद्यायज्ञक्रियागणैः ॥ ३२ ॥ (६।१६३।८)
स्वेनैव पौरुषेणाशु स्वसंवेदनरूपिणा ।
यत्नेन चित्तवेतालस्त्यक्त्वेष्टं वस्तु जीयते ॥३३॥ (३।१११।२)
विवेकैकानुसंधानाच्चिदंशात्मतया मनः ।

चिदेकतामुपायाति दृढाभ्यासवशादिह ॥३४॥ (३।११२।१५)

त्यजन्नभिमतं वस्तु यस्तिष्ठति निरामयः ।
जितमेव मनस्तेन कुदन्त इव दन्तिना ॥ ३५ ॥ ( ३।१११।३ )

तस्य चञ्चलता यैषा त्वविद्या राम सोच्यते ।
वासनापदनाम्नीं तां विचारेण विनाशय ॥३६॥(३।११२।११)

या योदेति मनोनाम्नी वासना वासितान्तरा ।
तां तां परिहरेत्प्राज्ञस्ततोऽविद्याक्षयो भवेत् ॥३७॥ (३।११२।२२)

विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वथा ।
अनास्था परमा ह्येषा सा युक्तिर्मनसो जये ॥३८॥(५।२४।१७)

ज्ञानादवसानीभावं स्वनाशं प्राप्नुयान्मनः ।
प्राणस्पन्दं च नादत्ते ततः शान्तिर्हि शिष्यते ॥३९॥ (६/१।६९।३५)

ज्ञानात्सर्वपदार्थानामसत्त्वमुदेत्यलम् ।
ततोऽङ्ग वासनानाशाद्वियोगः प्राणचेतसोः ॥४०॥ (६/१।६९।३६)

राजन्स्वात्मविचारोऽयं कोऽहं स्यामिति रूपधृक् ।
चित्तदुर्द्रुमबीजस्य दहने दहनः स्मृतः ॥ ४१ ॥ (४/१।९४।२९ )

यस्य मौर्ख्यं क्षयं यातं सर्वं ब्रह्मेति भावनात् ।
नोदेति वासना तस्य प्राज्ञस्येवाम्बुधिर्मरौ ॥४२॥ (६/१।८७।२५)

१—ज्ञानयुक्तिः :—

अपि पुष्पावदलनादपि लोचनमीलनात् ।
सुकरोऽहंकृतेस्त्यागो न क्लेशोऽत्र मनागपि ॥४३॥ (६/१।१११।३१)

यथैतदेवं तनय तथा शृणु वदामि ते ।

अज्ञानमात्रसंसिद्धं वस्तु ज्ञानेन नश्यति ॥४४॥(१।१११।३२)
यथा रज्ज्वां भुजङ्गत्वं मरावम्बुमतिर्यथा।
मिथ्यावभासः स्फुरति तथा मिथ्याप्यहंकृतिः॥४५॥(६/१।१११।३४)
मननं कृत्रिमं रूपं ममैतन्न यतोऽस्म्यहम्।
इति तत्त्यागतः शान्तं चेतो ब्रह्म सनातनम्॥४६॥(४।११।२७)

२—सङ्कल्पोच्छेदः :—

सङ्कल्पनं मनोबन्धस्तदभावो विमुक्तता। (६/२।१।२७)
अचित्तत्वमसङ्कल्पान्मोक्षस्तेनाभिजायते ॥४७॥ (५।१३।८०)
सङ्कल्पमात्रमेवेदं जगन्मिथ्यात्वमुत्थितम्।
असङ्कल्पनमात्रेण ब्रह्मन्क्वापि विलीयते ॥ ४८ ॥ (६/१।३३।४२)
उपशान्ते हि सङ्कल्पे उपशान्तमिदं भवेत्।
संसारदुःखमखिलं मूलादपि महामते ॥ ४९ ॥ (४।५४।१९)
सङ्कल्पेनैव सङ्कल्पं मनसा स्वमनो मुने।
छित्त्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् ॥५०॥(४।५४।१८)
भावनाभावमात्रेण सङ्कल्पः क्षीयते स्वयम्।
सङ्कल्पनाशयत्नेन न भयान्यनुगच्छति ॥५१॥ (४।५४।१३)
सङ्कल्पो येन हन्तव्यस्तेन भावविपर्ययात्।
अप्यर्धेन निमेषेण लीलयैव निहन्यते ॥ ५२ ॥ (४।५४।१६)
अहंभावनमेवाहुः कल्पनं कल्पनाविदः।
नभोऽर्थभावनं तस्य सङ्कल्पत्याग उच्यते ॥ ५३ ॥ (६/२।१।३)

३—भोगेष्वरतिः :—

भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते । ( ४।३५।३ )
यतो यतो विरज्यते ततस्ततो विमुच्यते ॥५४॥ ( ३।६१।३५ )
किमन्यैः शास्त्रसन्दर्भैः क्रियतामिदमेव तु ।
यद्यत्स्वाद्विह तत्सर्वं दृश्यतां विषवह्निवत् ॥ ५५ ॥ ( ४।३५।४)
जाता चेदरतिर्जन्तोः भोगान्प्रति मनागपि ।
तदसौ तावतैवोच्चैः पदं प्राप्त इति श्रुतिः ॥५६॥ (३।६१।३४)
न भोगेष्वरतिर्यावज्जायते भवनाशिनी । ( ५।२४।३७ )
न परा निर्वृतिस्तावत्प्राप्यते जयदायिनी ॥५७॥ (५।२४।३८)
तावद्भ्रमन्ति दुःखेषु संसारावटवासिनः ।
विरतिं विषयेष्वेते यावन्नायान्ति देहिनः ॥५८॥ ( ५।२४।२२ )
आत्मावलोकनेनैषा विषयारतिरुत्तमा ।
हृदये स्थितिमायाति श्रीरिवाम्भोजकोटरे ॥५९॥ (५।२४।५३)
परदृष्टौ वितृष्णात्वं तृष्णाभावे च दृक्परा ।
एते मिथः स्थिते दृष्टी तेजोदीपदशे यथा ॥ ६० ॥(५।२४।५३)
विचारो भोगगर्हातो विचाराद्भोगगर्हणम् । ( ५।२४।६२ )
परं पौरुषमाश्रित्य भोगेष्वरतिमाहरेत् ॥६१॥ ( ५।२४।३७ )
क्रमादभ्यस्यमानैषा विषयारतिरात्मज ।
सर्वतः स्फुटतामेति सेकसिक्ता लता यथा ॥६२॥ (५।२४।२०)
पुरुषार्थादृते पुत्र नेह सम्प्राप्यते शुभम् । ( ५।२४।२५ )
नासाद्यते ह्यनभ्यस्ता काङ्क्षतापि शठात्मना ॥६३॥(५।२४।२१)

४—इन्द्रियनिग्रहविधिः :—

मनो यदनुसंधत्ते तत्सर्वेन्द्रियवृत्तयः ।
क्षणात्संपादयन्त्येता राजाज्ञामिव मंत्रिणः ॥६४॥ (३।११४।४७)
तस्मान्मनोनुसंधानं भावेषु न करोति यः ।
अन्तश्चेतनयत्नेन स शान्तिमधिगच्छति ॥६५॥ (३।११४।४८)
परं पौरुषमाश्रित्य यत्नात्परमया धिया ।
भोगाशाभावनां चित्तात्समूलामलमुद्धरेत् ॥६६॥ (३।११४।५१)
चित्तमिन्द्रियसेनाया नायकं तज्जयाज्जयः ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ६७ ॥ ( ६।१६३।६ )
विवेकवानुदारात्मा विजितेन्द्रिय उच्यते ।
वासनावीचिवेगेन भवाब्धौ न स मुह्यते ॥६८॥( ६।१६३।१९ )

५—वासनात्यागः :—

वासनैव महाराज स्वरूपं विद्धि चेतसः ।
चित्तशब्दस्तु पर्यायो वासनाया उदाहृतः ॥६९॥ ( ६।९४।५ )
यथा स्वप्नपरिज्ञानात्स्वप्नदेहो न वास्तवः ।
अनुभूतोऽप्ययं तद्वद्वासनातानवादसत् ॥ ७० ॥ ( ३।२२।१ )
प्रक्षीणवासना येह जीवतां जीवनस्थितिः ।
अमुक्तैरपरिज्ञाता सा जीवन्मुक्ततोच्यते ॥ ७१ ॥( ३।२२।८ )
सर्वेषणानां संशान्तौ शुद्धचित्तस्य या स्थितिः ।

तत्सत्यमुच्यते सैषा विमला चिदुदाहृता ॥ ७२ ॥ (४।१७।३)

इदमस्तु ममेत्यन्तर्यैषा राघव भावना ।
तां तृष्णां शृंखलां विद्धि कलानां च महामते ॥७३॥ (५।१७।७)

तामेतां सर्वभावेषु सत्स्वसत्सु च सर्वदा ।
संत्यज्य परमोदारः परमेति महामनाः ॥ ७४ ॥ ( ५।१७।८ )

बन्धाशामथ मोक्षाशां सुखदुःखदशामपि ।
त्यक्त्वा सदसदाशां च तिष्ठाक्षुब्धमहाब्धिवत् ॥७५॥(५।१७।९)

(अ) तृष्णानिन्दा :—

जरामरणदुःखानामेका रत्नसमुद्गिका ।
आधिव्याधिविलासानां नित्यं मत्ता विलासिनी॥७६॥(१।१७।३९)

हार्दान्धकारशर्वर्या तृष्णयेह दुरन्तया ।
स्फुरन्ति चेतनाकाशे दोषकौशिकपंक्तयः ॥७७॥ ( १।१७।१ )

दृष्टदैन्यो हतस्वान्तो हतौजा याति नीचताम् ।
मुह्यति रौति पतति तृष्णयाभिहतो जनः ॥७८॥ (५।१५।१०)

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
क्षीयते जीर्यते सर्वं तृष्णैका न जीर्यते ॥ ७९ ॥ ( ६।९३।८६ )

(आ) संसारेऽस्मिन्न किमपि हेयोपादेयम् :—

मनःप्रकल्पिते भग्ने हृदि विस्तीर्णपत्तने ।
वृद्धिं चोपगते ब्रूहि किं वृद्धं कस्य किं क्षतम् ॥८०॥(४।४५।३५)

सर्वत्रासत्यभूतेऽस्मिन्प्रपञ्चैकान्तकारिणि ।
संसारे किमुपादेयं प्राज्ञो यदभिवाञ्छतु ॥ ८१ ॥ (४।४५।४२)

सर्वत्र सत्यभूतेऽस्मिन्ब्रह्मतत्त्वमयेऽपि च ।
किं स्यात्त्रिभुवने हेयं प्राज्ञाः परिहरन्तु यत्॥८२॥ (४।४५।४३)
आयुर्वायुविघट्टिताभ्रपटलीलम्बाम्बुवद्भङ्गुरम् ।
भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला ।
लोला यौवनलालना जलरयः कायः क्षणापायवान्
पुत्र त्वासमुपेत्य संसृतिवशान्निर्वाणमन्विष्यताम्॥८३॥(६/२।१३६।३२)

## ( इ ) वासनात्यागो द्विविधः :—

सर्वत्र वासनात्यागो राम राजीवलोचन ।
द्विविधः कथ्यते तज्ज्ञैर्ज्ञेयो ध्येयश्च मानद ॥८४॥ ( ५।१६।६ )
द्वावेव राघव त्यागौ समौ मुक्तपदे स्थितौ ।
द्वावेतौ ब्रह्मतां यातौ द्वावेव विगतज्वरौ ॥८५॥ ( ५।१६।१५ )

## ( १ ) ध्येयत्यागः :—

अहमेषां पदार्थानामेते च मम जीवितम् ।
नाहमेभिर्विना कश्चिन्न मयैते विना किल ॥ ८६ ॥( ५।१६।७ )
इत्यन्तर्निश्चयं कृत्वा विचार्य मनसा सह ।
नाहं पदार्थस्य न मे पदार्थ इति भाविते ॥८७॥ ( ५।१६।८ )
अन्तः शीतलया बुद्ध्या कुर्वत्या लीलया क्रियाम् ।
यो नूनं वासनात्यागो ध्येयो राम स कीर्तितः॥८८॥(५।१६।९)
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसंत्यागी जीवन्मुक्तः स उच्यते ॥८९॥(५।१६।११)

( २ ) ज्ञेयत्यागः :—

सर्वं समतया बुद्ध्वा यं कृत्वा वासनाक्षयम् ।
जहाति निर्ममो देहं ज्ञेयोऽसौ वासनाक्षयः ॥ ९० ॥(५।१६।१०)
निर्मूलकलनां त्यक्त्वा वासनां यः शमं गतः ।
ज्ञेयत्यागमयं विद्धि मुक्तं तं रघुनन्दन ॥९१॥ ( ५।१६।१२ )

( ई ) वासनात्यागयुक्तिः :—

बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज॥९२॥ (४।५७।१९)
तामसीर्वासनाः पूर्वं त्यक्त्वा विषयवासिताः ।
मैत्र्यादिभावनानाम्नीं गृहाणामलवासनाम्॥९३॥ (४।५७।२०)
तामप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तःशान्तसमस्तेहो भव चिन्मात्रवासनः ॥९४॥ (४।५७।२१)
तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमाधानो येन त्यजसि तत्त्यज ॥९५॥ (४।५७।२२)
चिन्मयः कलनाकालप्रकाशतिमिरादिकम् ।
वासनां वासितारं च प्राणस्पन्दनपूर्वकम् ॥९६॥ (४।५७।२३)
समूलमपि संत्यक्त्वा व्योमसौम्यप्रशान्तधीः ।
यस्त्वं भवसि सद्बुद्धे स भावनस्तु सत्कृतः॥९७॥(५।५७।२४)
हृदयात्संपरित्यज्य सर्वमेव महामतिः ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥९८॥ ( ४।५७।२५ )

समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥९९॥ (४।५७।२६)
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥१००॥(४।५७।२७)
यस्य मौर्ख्यं क्षयं यातं सर्वं ब्रह्मेति भावनात् ।
नोदेति वासना तस्य प्राज्ञस्येवाम्बुधिर्मरौ ॥१०१॥(६/१।८७।२५)
परमार्थावबोधेन समूलं शाम्यति वासना ।
दीपेनेवान्धकारश्रीर्गलत्यालोक एति च ॥१०२॥(५।७४।२१)

## ६—अहंकारोन्मूलनम् :—

अहंकाराम्बुदे क्षीणे चिद्व्योम्नि विमले तते ।
नूनं सम्प्रौढतामेति स्वालोको भास्करः परः॥१०३॥ (५।१३।१७)
चिज्ज्योत्स्ना यावदेवान्तरहंकारघनावृता ।
विकासयति नो तावत्परमार्थकुमुद्वतीम् ॥१०४॥ ( ४।३३।२८ )
अहंबीजश्चित्तद्रुमः सशाखाफलपल्लवः ।
उन्मूलय समूलं तमाकाशहृदयो भव ॥१०५॥ ( ६/१।९४।१३ )
अहंत्वोल्लेखतः सत्ता भ्रमभावविकारिणी ।
तदभावात्स्वभावैकनिष्ठता शमशालिनी ॥१०६॥ (६/२।२६।२९)
भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अहंभावोऽभिमन्तात्मा मूलमाद्यमुदाहृतम् ॥१०७॥ ( ६/२।१५।२ )
ईदृशोऽयं जगद्वृक्षो जायतेऽहंत्वबीजतः ।
बीजे ज्ञानाग्निनिर्दग्धे नैव किञ्चन जायते ॥१०८॥ ( ६/२।८।२ )

(अ) अहंकारोन्मूलनविधिः :—

प्रेक्षमाणं च तन्नास्ति किलाहंत्वं कदाचन ।
एतावदेव तज्ज्ञानमनेनैव प्रदह्यते ॥ १०९ ॥ (६।८।३)
चिन्मात्रदर्पणाकारे निर्मले स्वात्मनि स्थिते ।
इति भावानुसंधानादहंकारो न जायते ॥११०॥ (४।३३।४३)
मिथ्येयमिन्द्रजालश्रीः किं मे स्नेहविरागयोः ।
इत्यन्तरानुसंधानादहंकारो न जायते ॥१११॥ (४।३३।४४)
अहं हि जगदित्यन्तर्हेयादेयदृशोः क्षये ।
समतायां प्रसन्नायां नाहंभावः प्रवर्धते ॥११२॥ (४।३३।४६)

(आ) परमानुभवसिद्धिः :—

शान्तो दान्तश्चोपरतो निषिद्धाकाम्यकर्मणः ।
विषयेन्द्रियसंश्लेषसुखाच्च श्रद्धयान्वितः ॥११३॥ (६।१२८।२)
मृद्वासने समासीनो जितचित्तेन्द्रियक्रियः ।
ओमित्युच्चारयेत्तावन्मनो यावत्प्रसीदति ॥११४॥ (६।१२८।२)
प्राणायामं ततः कुर्यादन्तःकरणशुद्धये ।
इन्द्रियाण्याहरेत्पश्चाद्विषयेभ्यः शनैः शनैः ॥११५॥ (६।१२८।४)
देहेन्द्रियमनोबुद्धिक्षेत्रज्ञानां च सम्भवः ।
यस्माद्भवति तज्ज्ञात्वा तेषु पश्चाद्विलापयेत् ॥११६॥ (६।१२८।४)
विराजि प्रथमं स्थित्वा तत्रात्मनि ततः परम् ।
अव्याकृते स्थितः पश्चात्स्थितः परमकारणे ॥११७॥ (६।११८।५)

मांसादिपार्थिवं भागं पृथिव्यां प्रविलापयेत् ।
आप्यं रक्तादिकं चाप्सु तैजसं तेजसि क्षिपेत्॥११८॥(६।१२८।६)
वायव्यं च महावायौ नाभसं नभसि क्षिपेत् ।
पृथिव्यादिषु विन्यस्य चेन्द्रियाण्यात्मयोनिषु॥११९॥(६।१२८।७)
श्रोत्रादिलक्षणोपेतां कर्तुर्भोगप्रसिद्धये ।
दिक्षु न्यस्यात्मनः श्रोत्रं त्वचं विद्युति निक्षिपेत्॥१२०॥(६।१२८।८)
चक्षुरादित्यबिम्बे च जिह्वामप्सु विनिक्षिपेत् ।
प्राणं वायौ वाचमग्नौ पाणिमिन्द्रे विनिक्षिपेत्।१२१। (६।११८।९)
विष्णौ तथाऽऽत्मनः पादौ पायुं मित्रे तथैव च ।
उपस्थं कश्यपे न्यस्य मनश्चन्द्रे निवेशयेत्॥१२२॥(६।१२८।१०)
बुद्धिं ब्रह्मणि संयच्छेद्देताः करणदेवताः । (६।१२८।११)
एवं न्यस्यात्मनो देहं विराडस्मीति चिन्तयेत्॥१२३॥(६।१२८।१२)
ब्रह्माण्डान्तः स्थितो योऽसावर्धनारीश्वरः प्रभुः ।
आधारः सर्वभूतानां कारणं तदुदाहृतम्॥१२४॥(६।१२८।१३)
स यज्ञसृष्टिरूपोऽसौ जगद्वृत्तौ व्यवस्थितः । (६।१२८।१४)
क्षितिं चाप्सु समावेश्य सलिलं चानले क्षिपेत्।१२५।(६।१२८।१६)
अग्निं वायौ समावेश्य वायुं च नभसि क्षिपेत् ।
नभश्च महदाकाशे समस्तोत्पत्तिकारणे ॥१२६॥ (६।१२८।१७)
स्थित्वा तस्मिन्क्षणं योगी लिङ्गमात्रशरीरधृक् ।
वासना भूतसूक्ष्माश्च कर्मविद्ये तथैव च ॥११७॥(६।१२८।१८)
दशेन्द्रियमनोबुद्धिरेतल्लिङ्गं विदुर्बुधाः ।
ततोऽर्धोण्डाद्बहिर्यातस्तत्रात्मास्मीति चिन्तयेत्१२८(६।१२८।१९)

चतुर्मुखोग्रके चायं भूतसूक्ष्मव्यवस्थितः ।
लिङ्गमव्याकृते सूक्ष्मे न्यस्याव्यक्ते च बुद्धिमान् १२९(६।१२८।२०)
नामरूपविनिर्मुक्तं यस्मिन्संन्तिष्ठते जगत् ।
तमाहुः प्रकृतिं केचिन्मायामेके परे त्वणून् ॥१३०॥(६।१२८।२१)
अविद्यामपरे प्राहुस्तर्कविभ्रान्तचेतसः ।
तत्र सर्वे लयं गत्वा तिष्ठन्त्यव्यक्तरूपिणः ॥१३१॥(६।१२८।२२)
निःसम्बन्धा निरास्वादाः सम्भवन्ति ततः पुनः ।
तत्स्वरूपा हि तिष्ठन्ति यावत्सृष्टिः प्रवर्तते ॥१३२॥ (६।१२८।२३)
अतः स्थानत्रयं त्यक्त्वा तुरीयं पदमव्ययम् । (६।१२८।२४)
ध्यायेत्तत्प्राप्तये लिङ्गं प्रविलाप्य परं विशेत्॥१३३॥(६।१२८।२५)

( इ ) अहंभावे गलिते सर्वदोषापगमः :—

यत्किञ्चिदिदमायाति सुखदुःखमलं भवे ।
तदहंकारचक्रस्य प्रविकारो विजृम्भते ॥१३४॥ ( ४।३३।३५ )
गलिते वा गलद्रूपे चित्तेऽहंकारनामनि । ( ६।११६।१ )
बलादपि हि संजाता न लिम्पन्त्याशयं सितम्१३५(६।११६।२)
लोभमोहादयो दोषाः पयांसीव सरोरुहम् । (६।११६।२)
मुदिताद्याः श्रियो वक्त्रं न मुञ्चन्ति कदाचन॥१३६॥(६।११६।३)
वासनाग्रन्थयश्छिन्ना इव त्रुट्यन्त्यलं शनैः ।
कोपस्तानवमायाति मोहो मान्द्यं हि गच्छति॥१३७॥(६।११६।४)
कामः क्लमं गच्छति च लोभः क्वापि पलायते ।
नोल्लसन्तीन्द्रियाण्युच्चैः खेदः स्फुरति नोच्चकैः१३८(६।११६।५)

न दुःखान्युपबृंहन्ति न वल्गन्ति सुखानि च ।
सर्वत्र समतोदेति हृदि शैत्यप्रदायिनी ॥१३९॥ (६।११९।९)

७—असङ्गाभ्यासः :—

सम्वित्तेर्जन्मबीजस्य योऽन्तस्थो वासनारसः ।
स करोत्यङ्कुरोल्लासं तमसङ्गाग्निना दह ॥१४०॥( ६।२८।२३ )
अन्तःसङ्गवाञ्जन्तुर्मग्नः संसारसागरे ।
अन्तःसंसक्तिमुक्तस्तु तीर्णः संसारसागरात्॥१४१॥(५।६७।३०)
असक्तं निर्मलं चित्तं मुक्तं संसार्यपि स्फुटम् ।
सक्तं तु दीर्घतपसा युक्तमप्यतिबन्धवत् ॥१४२॥ (५।६७।३३)
संसक्तिवशतः सर्वे वितता दुःखराशयः । ( ५।६८।१० )
संसक्तचित्तमायान्ति सर्वा दुःखपरम्पराः ॥१४३॥(५।६८।४७)
असत्प्रायो हि सम्बन्धो यथा सलिलकाष्ठयोः ।
तथैव मिथ्यासम्बन्धः शरीरपरमात्मनोः ॥१४४॥ (५।६७।२४)
देहभावनयैवात्मा देहदुःखवशे स्थितः ।
तत्त्यागेन ततो मुक्तो भवतीति विदुर्बुधाः॥१४५॥ (५।६७।२६)
चिदात्मा निर्मलो नित्यः स्वावभासो निरामयः ।
देहस्त्वनित्यो मलवांस्तेन सम्बध्यते कथम्॥१४६॥(५।७१।२४)
केवलं चिति विश्रम्य किञ्चिच्चेत्यावलम्बिनि ।
सर्वत्र नीरसमिव तिष्ठत्वात्मरसं मनः ॥१४७॥ ( ५।६९।८ )
तत्रस्थो विगतासङ्गो जीवोऽजीवत्वमागतः ।
व्यवहारमिमं सर्वं मा करोतु करोतु वा ॥१४८॥( ५।६९।९ )

नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुषज्जते ।
सुसमो यः फलत्यागी सोऽसंसक्त इति स्मृतः ॥१४९॥(५।६८।६)
सर्वमात्मेदमखिलं किं वाञ्छामि त्यजामि किम् ।
इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थितिम्॥१५०॥(५।६८।४)
सर्वकर्मफलादीनां मनसैव न कर्मणा ।
निपुणं यः परित्यागी सोऽसंसक्त इति स्मृतः॥१५१॥(५।६८।८)
भावाभावे पदार्थानां हर्षामर्षविकारता ।
मलिना वासना यैषा सा सङ्ग इति कथ्यते॥१५२॥(५।९३।८४)
मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना । (५।९३।८५)
तामसङ्गाभिधां विद्धि यावद्देहं च भाविनी॥१५३॥(५।९३।८६)
कुर्वतोऽकुर्वतश्चैव मनसा यदमज्जगम् ।
शुभाशुभेषु कार्येषु तदसङ्गं विदुर्बुधाः ॥ १५४ ॥(६१।२८।२४)
अथवा वासनोत्साद एवासङ्ग इति स्मृतः ।
यया कयाचिद्युक्त्यान्तः सम्पादय तमेव हि॥१५५॥(६१।२८।२५)

८—समभावप्राप्तिः :—

मा खेदं भज हेयेषु नोपादेयपरो भव ।
हेयोपादेयदृशौ त्यक्त्वा शेषस्थः स्वच्छतां व्रज॥१५६॥(५।१३।२१)
हेयोपादेयकलने क्षीणे यावन्न चेतसः ।
न तावत्समता भाति साभ्रे व्योम्नीव चन्द्रिका।१५७।(५।१३।२३)
अवस्त्विदमिदं वस्तु यस्येति लुलितं मनः ।
तस्मिन्नोदेति समता शाखोट इव मञ्जरी ॥१५८॥(५।१३।२४)

युक्तायुक्तैषणा यत्र लाभालाभविलासिनी ।
समता स्वच्छता तत्र कुतो वैराग्यभासिनी ॥१५९॥(५।१३।२५)

( अ ) समतानन्दः :—

न तदासाद्यते राज्यान्न कान्ताजनसङ्गमात् ।
अनपायि सुखं सारं समत्वाद्यदवाप्यते ॥१६०॥(६१।१९८।१०)
द्वन्दोपशमसीमान्तं संरम्भज्वरनाशनम् ।
सर्वदुःखातपाम्भोदं समत्वं विद्धि राघव॥१६१॥(६१।१९८।११)
सुखदुःखेषु भीमेषु सन्ततेषु महत्स्वपि ।
मनागपि न वैरस्यं प्रयान्ति समदृष्टयः ॥१६२॥(६१।१९८।२७)

( आ ) सर्वबन्धुत्वम् :—

अयं बन्धुरयं नेति गणना लघुचेतसाम् ।
उदारचरितानां तु विगतावरणैव धीः ॥१६३॥ ( ५।१८।६१ )
न तदस्ति यत्राहं न तदस्ति न यन्मम ।
इति निर्णीय धीराणां विगतावरणैव धीः ॥१६४॥(५।१८।६२)
सर्वा एव हि ते भूतजातयो राम बन्धवः ।
अत्यन्तासंयुता एतास्तव राम न काश्चन ॥१६५॥(५।१८।६४)
एकत्वे विद्यमानस्य सर्वगस्य किलात्मनः ।
अयं बन्धुः परश्चायमित्यसौ कलना कुतः ॥१६६॥(५।२०।४)

९—कर्माभावः :—

कृष्णतासंक्षये यद्वत्क्षीयते कज्जलं स्वयम् ।
स्पन्दात्मकर्मविगमे तद्वत्प्रक्षीयते मनः ॥१६७॥ ( ३।९५।२५ )
वह्न्यौष्ण्ययोरिव सदा श्लिष्टयोश्चित्तकर्मणोः ।
द्वयोरेकतराभावे द्वयमेव विलीयते ॥ १६८ ॥ ( ३।९५।३७ )
आत्मज्ञानात्समुत्पन्नः सङ्कल्पः कर्मकारणम् । ( ६।१२४।५ )
सङ्कल्पितत्वं हि बन्धस्य कारणं तत्परित्यज॥१६९॥(६।१२४।६)
अवेदनमसम्वेद्यं यदवासनमासितम् ।
शान्तं सममनुल्लेखं स कर्मत्याग उच्यते ॥१७०॥ (६।३।२४)

१०—सर्वत्यागः :—

यावत्सर्वं न संत्यक्तं तावदात्मा न लभ्यते ।
सर्वावस्थापरित्यागे शेष आत्मेति कथ्यते ॥१७१॥(५।५८।४४)
यत्र सर्वात्मनैवात्मा लाभाय यतति स्वयम् ।
त्यक्तान्यकार्यं प्राप्नोति तन्नाम नृप नेतरत्॥१७२॥(५।५८।४६)
न किञ्चिद्येन सम्प्राप्तं तेनेदं परमामृतम् ।
सम्प्राप्यान्तः प्रपूर्णेन सर्वं प्राप्तमखण्डितम्॥१७३॥(५।३४।७६)
विद्धि चिन्तामणिं साधो सर्वत्यागमकृत्रिमम् ।
तमन्तं सर्वदुःखानां त्वं साधयसि शुद्धधीः ॥१७४॥ (६।९०।५)
सर्वत्यागेन शुद्धेन सर्वमासाद्यतेऽनघ ।
सर्वत्यागो हि साम्राज्यं किं चिन्तामणिना भवेत्॥१७५॥(६।९०।५)

( अ ) सर्वत्यागस्वरूपम् :—

साधो न देहत्यागेन न राज्यत्यजनेन च ।
न चोटजादिशोषेण सर्वत्यागो भवेन्नृप ॥१७६॥ (६/१।९३।२९)
सर्वस्यैव मनो वीजं तरुवीजं तरोरिव । ( ६/१।९३।३४ )
सर्वस्य वीजे संत्यक्ते सर्वं त्यक्तं भवत्यलम्॥१७७(६/१।९३।३५)
चित्तं सर्वमिति प्राहुस्त्यक्त्वा पुत्र राजसे ।
चित्तत्यागं विदुः सर्वत्यागं सर्वविदो जनाः॥१७८॥(६/१।१११।२१)
यत्सर्वं सर्वतो यच्च तस्मिन्सर्वैककारणे ।
सर्वस्मिन्संपरित्यक्ते सर्वत्यागः कृतो भवेत्॥१७९॥(६/१।९३।३०)
सूत्रं मुक्ताफलेनेव जगज्जालं त्रिकालकम् ।
सर्वमन्तः कृतं तेन येन सर्वं समुज्झितम् ॥१८०॥(६/१।९३।४९)

( आ ) महात्यागी :—

धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी ।
धिया येनेति सन्त्यक्तं महात्यागी स उच्यते॥१८१॥(६/१।११५।३३)
सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ता महात्यागी स उच्यते॥१८२॥(६/१।११५।३४)
न मे देहो न जन्मापि युक्तायुक्ते न कर्मणी ।
इति निश्चयवानन्तर्महात्यागी स उच्यते ॥१८३॥(६/१।११५।३६)
देहस्य मनसो दुःखैरिन्द्रियाणां मनःस्थितेः ।
नूनं येनोज्झिता सत्ता महात्यागी स उच्यते॥१८४॥(६/१।११५।३५)

येन धर्ममधर्मं च मनोमननमीहितम् ।
सर्वमन्तः परित्यक्तं महात्यागी स उच्यते॥१८५॥(६।११५।३७)
यावती दृश्यकलना सकलेयं विलोक्यते ।
सा येन सुष्टु संत्यक्ता महात्यागी स उच्यते।१८६।(६।११५।३८)

( इ ) त्यागफलम् :—

न गृह्णाति हि यत्किञ्चित्सर्वं तस्मै प्रदीयते । (६।९३।६२)
सर्वं त्यजति यस्तस्य सर्वमेवोपतिष्ठते ॥१८७॥ (६।९३।५९)

११—समाधानम् ( समाधिः ) :—

यदि वापि समाधाने निर्विकल्पे स्थितिं व्रजेत् ।
तदक्षयसुषुप्ताभं तन्मन्येतामलं पदम् ॥१८८॥ (३।१।३६)

( अ ) समाधिस्वरूपम् :—

बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि ।
अविश्रान्तस्वभावस्य कः समाधिः कथं च वा॥१८९॥(५।६२।७)
तत्त्वावबोधो भगवन्सर्वाशातृणपावकः ।
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥१९०॥(५।६२।८)
समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ।
साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥१९१॥ (५।६२।९)
अक्षुब्धा निरहङ्कारा द्वन्द्वेष्वननुपातिनी ।
प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः। १९२॥ (५।६२।१०)

निश्चिन्ताधिगताभीष्टा हेयोपादेयवर्जिता ।
प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥१६३॥(५।६२।११)
यतःप्रभृति बोधेन युक्तमात्यन्तिकं मनः ।
तदारभ्य समाधानमव्युच्छिन्नं महात्मनः ॥१६४॥(५।६२।१२)
परं विषयवैतृष्ण्यं समाधानमुदाहृतम् । ( ६।४५।४६ )
इदं विषयवैरस्यमेव ध्यानमुदाहृतम् ॥१६५॥ ( ६।४६।१६ )
सर्वार्थशातलत्वेन बलाद्ध्याने यदाऽऽगतम् ।
ज्ञानाद्विषयवैरस्यं स समाधिर्हि नेतरः ॥ १६६ ॥ (६।४६।१५)
सम्यग्ज्ञानं समुच्छूनं सदैवोज्झितवासनम् ।
ध्यानं भवति निर्वाणमानन्दपदमागतम् ॥१६७॥ (६।४६।१८)

## [ १० ] चित्तनाशानन्दः :—

संशान्ते चित्तवेताले यामानन्दकलां तनुः ।
याति तामपि राज्येन जागतेन न गच्छति ॥ १ ॥(४।१५।२०)
सर्वाशाज्वरसंमोहमिहिकाशरदागमम् ।
अचित्तत्वं विना नान्यच्छ्रेयः पश्यामि जन्तुषु ॥२॥ (४।१५।२४)
त एव सुखसंभोगसीमान्तं समुपागताः ।
महाधिया शान्तधियो ये याता विमनस्कताम्॥३॥ (४।१५।२५)
चित्तताम्रे शोधिते हि परमार्थसुवर्णताम् ।
गतेऽकृत्रिम आनन्दः किं देहोपलखण्डकैः ॥ ४ ॥ (३।६१।४६)

## ५—सप्त ज्ञानभूमयः

इमां सप्तपदां ज्ञानभूमिमाकर्णयानघ ।
नानया ज्ञातया भूयो मोहपङ्के निमज्जसि ॥ १ ॥ (३।११८।१)
वदन्ति बहुभेदेन वादिनो योगभूमिकाः ।
मम त्वभिमता नूनमिमा एव शुभप्रदाः ॥ २ ॥ (३।११८।२)

### [ १ ] प्रथमं मतम्ः——

अवबोधं विदुर्ज्ञानं तदिदं सप्तभूमिकम् ।
मुक्तिस्तु ज्ञेयमित्युक्तं भूमिकासप्तकात्परम् ॥१॥ (३।११८।३)
सत्यावबोधो मोक्षश्चैवेति पर्यायनामनी ।
सत्यावबोधो जीवोऽयं नेह भूयः प्ररोहति ॥ २ ॥ (३।११८।४)
ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया तु तृतीया तनुमानसा ॥३॥ (३।११८।५)
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥४॥ ( ३।११८।६ )
आसामन्ते स्थिता मुक्तिस्तस्यां भूयो न शोच्यते ।
एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥५॥ ( ३।११८।७ )
स्थितः किं मूढ एवास्मि प्रेक्ष्येऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥६॥ (३।११८।८)
शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा॥ ७ ॥ (३।११८।९)

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ।
यात्र सा तनुताभावात्प्रोच्यते तनुमानसा ॥८॥ (३।११८।१०)
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थे विरतेर्वशात् ।
सत्यात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ॥९॥(३।११८।११)
दशाचतुष्टयाभ्यासादसंसङ्गफलेन च ।
रूढसत्त्वचमत्कारात्प्रोक्ता संसक्तिनामिका॥१०॥(३।११८।१२)
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया दृढम् ।
आभ्यन्तराणां वाह्यानां पदार्थानामभावनात्॥११॥ (३।११८।१३)
परप्रयुक्तेन चिरं प्रयत्नेनार्थभावनात् ।
पदार्थाभावनानाम्नी षष्ठी संजायते गतिः ॥१२॥(३।११८।१४)
भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भतः ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः॥१३॥(३।११८।१५)
एषा हि जीवन्मुक्तेषु तुर्यावस्थेह विद्यते ।
विदेहमुक्तिविषयस्तुर्यातीतमतः परम् ॥ १४ ॥ (३।११८।१६)

[ २ ] द्वितीयं मतम् :—

शास्त्रसज्जनसम्पर्कैः प्रज्ञामादौ विवर्धयेत् ।
प्रथमा भूमिकैषोक्ता योगस्यैव च योगिनः ॥१॥ (६।१२०।१)
विचारणा द्वितीया स्यात्तृतीयाऽसङ्गभावना ।
विलापनी चतुर्थी स्याद्वासनाविलयात्मिका ॥२॥ (६।१२०।२)
शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी ।
अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठति ॥३॥ (६।१२०।३)

स्वसंवेदनरूपा च षष्ठी भवति भूमिका ।
आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः ॥४॥ (६।१२०।४)
तुर्यावस्थोपशान्ताथ मुक्तिरेवेह केवलम् ।
समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ॥५॥(६।१२०।५)
तुर्यातीता तु यावस्था परा निर्वाणरूपिणी ।
सप्तमी सा परिप्रौढा विषयः स्यान्न जीवताम् ॥६॥(६।१२०।६)
पूर्वावस्थात्रयं त्वत्र जाग्रदित्येव संस्थितम् ।
चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ॥७॥(६।१२०।७)
आनन्दैकघनीभावात्सुषुप्ताख्या तु पञ्चमी ।
असंवेदनरूपाथ षष्ठी तुर्यपदाभिधा ॥ ८ ॥ (६।१२०।८)
तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा ।
मनोवचोभिरग्राह्या स्वप्रकाशपदात्मिका ॥९॥ (६।१२०।९)

[ ३ ] तृतीयं मतम् :—

( १ ) प्रथमा भूमिका :—

अनेकजन्मनामन्ते विवेकी जायते पुमान् । (६।१२६।४)
असारा बत संसारव्यवस्थालं ममैतया ॥ १ ॥ (६।१२६।५)
कथं विरागवान्भूत्वा संसाराब्धिं तराम्यहम् ।
एवं विचारणापरो यदा भवति सन्मतिः ॥ २ ॥ (६।१२६।७)
विरागमुपयात्यन्तर्भावनास्वनुवासरम् ।
क्रियासूदाररूपासु क्रमतेमोदतेऽन्वहम् ॥ ३ ॥ (६।१२६।८)

ग्राम्यासु जडचेष्टासु सततं विचिकित्सति ।
नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ ४ ॥ (६।१२६।९)
मनोनुद्वेगकारीणि मृदुकर्माणि सेवते ।
पापाद्बिभेति सततं न च भोगमपेक्षते ॥ ५ ॥ ( ६।१२६।१० )
स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ।
देशकालोपपन्नानि वचनान्यभिभाषते ॥ ६ ॥ ( ६।१२६।११ )
मनसा कर्मणा वाचा सज्जनानुपसेवते । ( ६।१२६।१२ )
यतः कुतश्चिदानीय ज्ञानशास्त्राण्यवेक्षते ॥७॥ (६।१२६।१३)

( २ ) द्वितीया भूमिका :—

श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणाम् ।
मुख्यया व्याख्यया ख्याताञ्श्रयते श्रेष्ठपण्डितान् ८॥(६।१२६।१५)
पदार्थप्रविभागज्ञः कार्याकार्यविनिर्णयम् ।
जानात्यधिगतश्चान्यो गृहं गृहपतिर्यथा ॥९॥ (६।१२६।१६)
मदाभिमानमात्सर्यमोहलोभातिशायिताम् ।
बहिरप्याश्रितामीषत्त्यजत्यहिरिव त्वचम् ॥ १० ॥ (६।१२६।१७)
इत्थंभूतमतिः शास्त्रगुरुसज्जनसेवनात् ।
सरहस्यमशेषेण यथावदधिगच्छति ॥ ११ ॥ (६।१२६।१८)

( ३ ) तृतीया भूमिका :—

यथावच्छास्त्रवाक्यार्थे मतिमाधाय निश्चलम् ।
तापसाश्रमविश्रामैरध्यात्मकथनक्रमैः ॥ १२ ॥ ( ६।१२६।२० )

संसारनिन्दकैस्तद्वद्वैराग्यकरणाक्रमैः ।
शिलाशय्यासमासीनो जरयत्यायुराततम् ॥१३॥ (६।१२६।२१)
वनवासविहारेण चित्तोपशमशोभिना ।
असङ्गसुखसौम्येन कालं नयति नीतिमान् ॥१४॥ (६।१२६।२२)
द्विविधोऽयमसंसङ्गः सामान्यः श्रेष्ठ एव च । (६।१२६।२५)

( अ ) सामान्योऽसङ्गः :—

प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव च ॥ १५ ॥ (६।१२६।२६)
सुखं वा यदि वा दुःखं कैवात्र मम कर्तृता ।
भोगाभोगा महारोगाः सम्पदः परमापदः ॥१६॥ (६।१२६।२७)
वियोगायैव संयोगा आधयो व्याधयो धियः ।
कालः कवलनोद्युक्तः सर्वभावाननारतम् ॥१७॥ (६।१२६।२८)
अनास्थयेति भावानां यदभावनमान्तरम् ।
वाक्यार्थलग्नमनसः सामान्योऽसावसङ्गमः ॥१८॥ (६।१२६।२९)

( आ ) श्रेष्ठोऽसङ्गः :—

अनेकक्रमयोगेन संयोगेन महात्मनाम् ।
वियोगेनासतामन्तः प्रयोगेणात्मसंविदाम् ॥१९॥ (६।१२६।३०)
पौरुषेण प्रयत्नेन संतताभ्यासयोगतः ।
करामलकवद्वस्तुन्यागते स्फुटतां दृढम् ॥२०॥ (६।१२६।३१)
संसाराम्बुनिधेः पारे सारे परमकारणे ।
नाहं कर्तेश्वरः कर्ता कर्म वा प्राक्तनं मम ॥२१॥ (६।१२६।३२)

कृत्वा दूरतरे नूनमिति शब्दार्थभावनम् ।
यन्मौनमासनं शान्तं तच्छेष्ठासङ्ग उच्यते ॥२२॥ (६।१२६।३३)

( ४ ) चतुर्थी भूमिका :—

भूमिकात्रितयाभ्यासादज्ञाने क्षयमागते ।
सम्यग्ज्ञानोदये चित्ते पूर्णचन्द्रोदयोपमे ॥२३॥ (६।१२६।५८)
निर्विभागमनाद्यन्तं योगिनो युक्तचेतसः ।
समं सर्वं प्रपश्यन्ति चतुर्थीं भूमिकामिताः ॥२४॥ (६।१२६।५९)
अद्वैते स्थैर्यमायाते द्वैते प्रशममागते ।
पश्यन्ति स्वप्नवल्लोकांश्चतुर्थीं भूमिकामिताः॥२५॥(६।१२६।६०)

(५) पञ्चमी भूमिका :—

सत्तावशेष एवास्ते पञ्चमीं भूमिकां गतः ।
पञ्चमीं भूमिकामेत्य सुषुप्तपदनामिकाम् ॥२६॥ (६।१२६।६२)
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ।
गलितद्वैतनिर्भासमुदितोऽन्तः प्रबुद्धवान् ॥२७॥ (६।१२६।६३)
सुषुप्तघन एवास्ते पञ्चमीं भूमिकामितः ।
अन्तर्मुखतया तिष्ठन्बहिर्वृत्तिपरोऽपि सन् ॥२८॥ (६।१२६।६४)
परिशान्ततया नित्यं निद्रालुरिव लक्ष्यते ।
कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ॥२९॥ (६।१२६।६५)

(६) षष्ठी भूमिका :-

षष्ठीं तुर्याभिधामन्यां क्रमात्क्रपति भूमिकाम् ।
यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ॥३०॥ (६।१२६।६६)
केवलं क्षीणमननमास्ते द्वैतैक्यनिर्गतः ।
निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तो विभावनः॥३१॥ (६।१२६।६७)
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ।
अन्तःशून्यो बहिःशून्यः शून्यः कुम्भ इवाम्बरे॥३२॥(६।१२६।६८)
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ।
किञ्चिदेवैष सम्पन्नस्त्वथ वैष न किञ्चन ॥३३॥ (६।१२६।६९)

(७) सप्तमी भूमिका :-

षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ।
विदेहमुक्तता तूक्ता सप्तमी योगभूमिका ॥३४॥ (६।१२६।७०)
अगम्या वचसां शान्ता सा सीमा भवभूमिषु । (६।१२६।७१)
नित्यमव्यपदेश्यापि कथंचिदुपदिश्यते ॥३५॥ (६।१२६।७३)
मुक्तिरेषोच्यते राम ब्रह्मैतत्समुदाहृतम् ।
निर्वाणमेतत्कथितं पूर्णात्पूर्णतराकृति ॥३६॥ (३।९।२५)
विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो नचाहं न च नेतरः ॥३७॥ ( ३।९।१५ )

## ६—कर्मपाशोच्छेदः

### [१] कर्मफलानियमः :—

न स शैलो न तद्व्योम न सोऽब्धिश्च न विष्टपम् ।
अस्ति यत्र फलं नास्ति कृतानामात्मकर्मणाम् ॥१॥ (३।९५।३३)
ऐहिकं प्राक्तनं वापि कर्म यद्रचितं स्फुरत् ।
पौरुषोऽसौ परो यत्नो न कदाचन निष्फलः ॥२॥ (३।९५।३४)

### [२] कर्मस्वरूपम् :—

क्रियास्पन्दो जगत्यस्मिन्कर्मेति कथितो बुधैः ।
पूर्वं तस्य मनो देहं कर्मातश्चित्तमेव हि ॥ १ ॥ ( ३।९५।३२ )
मानसोऽयं समुन्मेषः कलाकलनरूपतः ।
एतत्तत्कर्मणां बीजं फलमस्यैव विद्यते ॥२॥ (३।९५।२९)
कर्मबीजं मनःस्पन्दः कथ्यतेऽथानुभूयते ।
क्रियास्तु विविधास्तस्य शाखाश्चित्रफलास्तरोः ॥३॥(३।९६।११)

### [३] पुरुषकर्मणोरभेदः :—

कुसुमाशययोर्भेदो न यथा भिन्नयोरिह ।
तथैव कर्ममनसोर्भेदो नास्त्यविभिन्नयोः ॥ १ ॥ ( ३।९५।३१ )
कल्पनात्मिकया कर्मशक्त्या विरहितं मनः ।
न सम्भवति लोकेऽस्मिन्गुणहीनो गुणी यथा ॥२॥ (३।९६।६)

यथा वह्न्यौष्ण्ययोः सत्ता न सम्भवति भिन्नयोः ।
तथैव कर्ममनसोस्तथात्ममनसोरपि ॥ ३ ॥ ( ३।९६।७ )
मनागपि न भेदोऽस्ति संवित्स्पन्दमयात्मनोः ।
कल्पनांशादृते राम स्रष्टौ पुरुषकर्मणोः ॥ ४ ॥ ( ६/१।२८।६ )
कर्मैव पुरुषो राम पुरुषस्यैव कर्मता ।
एते ह्यभिन्ने विद्धि त्वं यथा तुहिनशीतते ॥ ५ ॥ (६/१।२८।८)
संवित्स्पन्दरसस्यैव दैवकर्मनरादयः ।
पर्यायशब्दा न पुनः पृथक्कर्मादयः स्थिताः ॥ ६ ॥ (६/१।२८।१०)
बीजाङ्कुरविकल्पानां क्रियापुरुषकर्मणाम् ।
ऊर्मिवीचितरङ्गाणां नास्ति भेदो न वस्तुनि ॥७॥ (६/१।२८।२१)

## [४] सर्गादौ जवानां प्राक्तनानि कर्माणि न सन्ति :—

सर्गादिषु स्वयं भान्ति ब्रह्माद्या ये स्वयम्भुवः ।
विज्ञप्तिमात्रदेहास्ते न तेषां जन्मकर्मणी ॥ १ ॥ ( ६/२।१४२।२४ )
सर्गादौ प्राक्तनं कर्म विद्यते नेह कस्यचित् ।
सर्गादौ सर्गरूपेण ब्रह्मैवेत्थं विजृम्भते ॥ २ ॥ (६/२।१४२।२६)
अकारणमुपायान्ति सर्वे जीवाः परात्पदात् । ( ६/१।१२४।४ )
पश्चात्तेषां स्वकर्माणि कारणं सुखदुःखयोः ॥३॥ (६/१।१२४।५)
यथा ब्रह्मादयो भान्ति सर्गादौ ब्रह्मरूपिणः ।
भान्ति जीवास्तथान्येऽपि शतशोऽथ सहस्रशः ॥४॥(६/२।१४२।२७)
किन्तु ये ब्रह्मणोऽन्यत्वं बुध्यन्ते सात्विकोद्भवाः ।

अबोधा येत्वचिदाख्यं बुद्ध्वा द्वैतमिदं स्वयम् ॥५॥ (६।१४२।२८)
तेषामुत्तरकालं तत्कर्मभिर्जन्म दृश्यते ।
स्वयमेव तथा भूतैस्तैरवस्तुत्वमाश्रितम् ॥ ६ ॥ (६।१४२।२९)
यैस्तु न ब्रह्मणोऽन्यत्वं बुद्धं बोधमहात्मनि ।
निरवद्यास्त एतेऽत्र ब्रह्मविष्णुहरादयः ॥ ७ ॥ (६।१४२।३०)
न सम्भवति जीवस्य सर्गादौ कर्म कस्यचित् ।
पश्चात्स्वकर्म निर्माय भुङ्क्ते कल्पनया स चित् ॥८॥ (६।१४२।३९)
सर्गे सर्गतया रूढे भवेत्प्राक्कर्मकल्पना ।
पश्चाज्जीवा भ्रमन्तीमे कर्मपाशवशीकृताः ॥ ९ ॥ (६।१४२।४१)
स्वप्नद्रष्टुर्दृश्यनृणामस्ति काल्पनिकं यथा ।
न वास्तवं पूर्वकामं जाग्रत्स्वप्ने तथा नृणाम् ॥१०॥(६।१४३।१०)
यथा प्राक्कर्म पुंस्त्वे च स्वप्ने पुंसां न विद्यते ।
इह जाग्रत्स्वप्ननृणां भातानामपि नो तथा ॥११॥ (६।१४३।११)
जीवः सर्वेषु सर्गेषु स्वप्नार्थान्निखिलान्मिथः ।
प्राक्कर्मसत्वं मिथ्यात्म यथावासनमेषु च ॥१२॥ (६।१४३।१२)
ब्रह्मणो हृदि सर्गोऽयं हृदि ते स्वप्नपूर्यथा ।
कार्यकारणता तत्र तथास्तेऽभिहिता यथा ॥१३॥ (६।१४३।२३)

[५] वासनैव कर्मफलेषु बध्नाति :—

वासनामात्रसारत्वादज्ञस्य सफलाः क्रियाः ।
सर्वा एवाफला ज्ञस्य वासनामात्रसंक्षयात् ॥१॥ (६।८७।१८)

सर्वा हि वासनाभावे प्रयान्त्यफलतां क्रियाः ।
अशुभाः फलवन्त्योऽपि सेकाभावे लता इव ॥२॥ (६।८७।१९)
ऋत्वन्तरे यथा याति विलयं पूर्वमार्तवम् ।
तथैव वासनानाशे नाशमेति क्रियाफलम् ॥ ३॥ (६।८७।२०)
न स्वभावेन फलति यथा शरलता फलम् ।
क्रिया निर्वासना पुत्र फलं फलति नो तथा ॥ ४ ॥ (६।८७।२१)

[६] कर्मबन्धनान्मुक्तेर्विधिः :—

आत्मज्ञानात्समुत्पन्नः संकल्पः कर्मकारणम् । ( ६।१२४।५ )
संकल्पितं हि बन्धस्य कारणं तत्परित्यज ॥१॥ (६।१२४।६)
कर्मकल्पनया संवित्स्वकर्मफलभागिनी ।
कर्मकल्पनयोन्मुक्ता न कर्मफलभागिनी ॥ २ ॥ (६।१४९।२३)
सर्वा हि वासनाभावे प्रयान्त्यफलतां क्रियाः ।
अशुभाः फलवन्त्योऽपि सेकाभावे लता इव ॥३॥ (६।८७।१९)
समया स्वच्छया बुद्ध्या सततं निर्विकारया ।
यथा यत्क्रियते राम तददोषाय सर्वदा ॥ ४ ॥ (६।१९९।७)
शुभाशुभाः क्रिया नित्यं कुर्वन्परिहरन्नपि ।
पुनरेति न संसारमसंसक्तमना मुनिः ॥ ५ ॥ (६।१९९।३३)
शुभाशुभाः क्रिया नित्यमकुर्वन्नपि दुर्मतिः ।
निमज्जत्येव संसारे परित्यक्तमनाः शठः ॥६॥ (६।१९९।३४)

यो ह्यन्तस्थाया मनोवृत्तेर्निश्चय उपादेयताप्रत्ययो वासनाभि-

धानस्तत्कर्तृत्वशब्देनोच्यते ॥ ७ ॥ (४।३८।२)

चेष्टावशात्तादृक्फलभोक्तृत्वं वासनानुरूपं स्पन्दते पुरुषः स्पन्दानुरूपं फलमनुभवति । फलभोक्तृत्वं नाम कर्तृत्वादिति सिद्धान्तः ॥ ८ ॥ ( ४।३८।३ )

कुर्वतोऽकुर्वतो वापि स्वर्गेऽपि नरकेऽपि वा ।
यादृग्वासनमेतत्स्यान्मनस्तदनुभूयते ॥ ९ ॥ ( ४।३८।४ )

तस्मादज्ञाततत्त्वानां पुंसां कुर्वतामकुर्वतां च कर्तृता नतु ज्ञाततत्त्वानामवासनत्वात् ॥ १० ॥ ( ४।३८।५ )

ज्ञाततत्त्वो हि शिथिलीभूतवासनः कुर्वन्नपि फलं नानुसंदधाति । अथच स्पन्दमात्रं केवलं करोत्यसक्तबुद्धिः सम्प्राप्तमपि फलमात्मैवेदं सर्वमेव कर्मफलमनुभवति ॥ ११ ॥ ( ४।३८।६ )

मनो यत्करोति तत्कृतं भवति यन्न करोति तन्न कृतं भवति अतो मन एव कर्तृ न देहः ॥ १२ ॥ (४।३८।७)

अकुर्वन्नपि श्वभ्रपतनं शय्यासनगतोऽपि श्वभ्रपातवासनावासिते चेतसि श्वभ्रपतनदुःखमनुभवति । अपरस्तु कुर्वन्नपि श्वभ्रपतनं परमुपशममुपगतवति मनसि शय्यासनसुखमनुभवति । एवमनयोः शय्यासनश्वभ्रपातयोरेकः श्वभ्रपतनस्याकर्तापि कर्ता संपन्नो द्वितीयश्च श्वभ्रपतनस्य कर्ताप्यकर्ता सम्पन्नश्चित्तवशात्तस्माद्यच्चित्तं तन्मयो भवति पुरुष इति सिद्धान्तः । तेन तत्र कर्तुरकर्तुर्वा नित्यमसंसक्तं भवतु चेतः ॥१३॥ (४।३८।१२-१३)

एवं मनः सर्वकर्मणां सर्वेहितानां सर्वभावानां सर्वलोकानां सर्वगतीनां वीजं तस्मिन्परिहृते सर्वकर्माणि परिहृतानि भवन्ति सर्वदुःखानि क्षीयन्ते सर्वकर्माणि लयमुपयान्ति । मानसेनापि कर्मणा यत्कृतेनापि ज्ञो नाक्रम्यते न विवशीक्रियते न रञ्जनामुपैत्य-व्यतिरिक्तात् ॥ १४ ॥ (४।३८।१६)

यथा वालो मनसा नगरस्य निमार्णं निर्मृष्टं च कुर्वन्नगरनिर्माणं मनःकृतमकृतमिव लीलयानुभवति नोपदेयतया सुखदुःखमकृत्रिम मिति पश्यति नगरनिर्मथनं च मनःकृतं कृतमिति पश्यतीति दुःखमपि लीलयानुभवन्नपि न दुःखमिति पश्यति। एवमसौ परमार्थतः कुर्वन्नपि न लिप्यत एवेति ॥ १५ ॥ ( ४।३८।१७)

शुभाशुभात्मकर्म स्वं नाशनीयं विवेकिना ।
तन्नास्तीत्यवबोधेन तत्त्वज्ञानेन सिध्यति ॥ १६ ॥ (६।३।७)
अवेदनमसंवेद्यं यदवासनमासितम् ।
शान्तं सममनुल्लेखं स कर्मत्याग उच्यते ॥ १७ ॥ (६।३।२४)
समूलकर्मसंत्यागेनैव ये शान्तिमास्थिताः ।
नैव तेषां कृतेनार्थो नाकृतेनेह कश्चन ॥ १८ ॥ (६।३।२७)

इत्येव निश्चयमनामय भावयित्वा
त्यक्त्वा भृशं पुरुषकर्मविचारशङ्काम् ।
निर्वासनः सकलसंकलनाविमुक्तः
संविद्वपुर्ननु यथाभिमतेच्छमास्स्व ॥१९॥ (६।२८।३२)

ये त्वेव कर्मसंत्यागमकृत्वान्यत्प्रकुर्वते ।
अत्यागं त्यागरूपात्म गगनं मारयन्ति ते ॥ २० ॥ (६।३।३४)
कर्मत्यागे स्थिते बोधाज्जीवन्मुक्तो विवासनः ।
गृहे तिष्ठत्वरण्ये वा शाम्यत्वभ्येतु वोदयम् ॥२१॥ (६।३।३७)
गेहमेवोपशान्तस्य विजनं दूरकाननम् ।
अशान्तस्याप्यरण्यानि विजना सजना पुरी ॥२२॥ (६।३।३८)

[७] कर्मयोगः :—

अलब्धज्ञानदृष्टीनां क्रिया पुत्र परायणम् ।
यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यज्यत्यसौ ॥१॥ (६।८७।१७)
बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते ।
संकल्पनं मनोबन्धस्तदभावो विमुक्तता ॥ २ ॥ (६।१।२७)
नेह कार्यं न वाकार्यमस्ति किञ्चिन्न कुत्रचित् ।
सर्वं शिवमजं शान्तमनन्तं प्राग्वदास्यताम् ॥ ३ ॥ (६।१।२८)
सर्वकर्मफलाभोगमलं विस्मृत्य सुप्तवत् ।
प्रवाहपतिते कार्ये स्पन्दस्व गतवेदनम् ॥ ४ ॥ (६।१।१६)
यथाप्राप्तं हि कर्तव्यमसक्तेन सदा सता ।
मुकुरेणाकलङ्केन प्रतिबिम्बक्रिया यथा ॥ ५ ॥ (३।८८।११)
एतदेव परं धैर्यं जन्मज्वरनिवारणम् ।
यद्वासनमभ्यस्ता निजकर्मसु कर्तृता ॥ ६ ॥ (६।१।२४)
प्रतिषेधविधीनां तु तज्ज्ञो न विषयः क्वचित् ।
शान्तसर्वैषणोच्छस्य कोऽस्य किं वक्ति किंकृते ॥७॥ (६।३७।३१)

अज्ञस्तु दितचित्तत्वात्क्रियानियमनं विना ।
गच्छन्न्यायेन मात्स्येन परं दुःखं प्रयाति हि ॥८॥ (६।६९।९)

सुज्ञास्त्विष्टेष्वनिष्टेषु न निमज्जन्ति वस्तुषु ।
यतेन्द्रियत्वाद्बुद्धत्वान्निर्वासनतया तथा ॥ ९ ॥ (६।६९।१०)

न निन्द्यमस्ति नानिन्द्यं नोपादेयं न हेयता ।
न चात्मीयं न च परं कर्म ज्ञविषयं क्वचित् ॥१०॥ (६।६९।१३)

महाकर्ता महाभोक्ता महात्यागी भवानघ ।
सर्वाः शङ्काः परित्यज्य धैर्यमालम्ब्य शाश्वतम्॥११॥(६।११५।१)

रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्षेण महाकर्ता स उच्यते ॥१२॥ (६।११५।१२)

न किञ्चन द्वेष्टि न किञ्चिदभिकाङ्क्षति ।
भुंक्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते ॥१३॥ (६।११५।२१)

सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ता महात्यागी स उच्यते ॥१४॥ (६।११५।३४)

अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर राघव ॥ १५ ॥ (५।१८।१८)

उदारः पेशलाचारः सर्वाचारानुवृत्तिमान् ।
अन्तः सर्वपरित्यागी लोके विहर राघव ॥१६। (५।१८।१९)

अन्तर्नैराश्यमादाय बहिराशोन्मुखेहितः ।
बहिस्तप्तोऽन्तरा शीतो लोके विहर राघव ॥१७॥ (५।१८।२१)

बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
कर्ता बहिरकर्तान्तर्लोके विहर राघव ॥ १८ ॥ (५।१८।२२)

बहिर्लोकोचिताचारस्त्वन्तस्त्यागवर्जितः ।
समो ह्यतीव तिष्ठ त्वं संशान्तसकलैषणः ॥१९॥ (४।१५।४४)
सर्वैषणाविमुक्तेन स्वात्मनात्मनि तिष्ठता ।
कुरु कर्माणि कार्याणि नूनं देहस्थ संस्थितिः ॥२०॥ (४।१५।४५)
शुद्धं सदसतोर्मध्यं पदं बुद्ध्याऽवलम्ब्य च ।
सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥२१॥ (४।४६।१४)
अत्यन्तविरतः स्वस्थः सर्ववासविवर्जितः ।
व्योमवत्तिष्ठ नीरागो राम कार्यपरोऽपि सन् ॥२२॥ (४।४६।१५)
यथैव कर्मकरणे कामना नास्ति धीमताम् ।
तथैव कर्मसंत्यागे कामना नास्ति धीमताम् ॥२३॥ (३।८८।१२)
अतः सुषुप्तोपमया धिया निष्कामया तया ।
सुषुप्तबुद्धसमया कुरु कार्यं यथागतम् ॥ २४ ॥ (३।८८।१३)
गम्यदेशैकनिष्ठस्य यथा पान्थस्य पादयोः ।
स्पन्दो विगतसंकल्पस्तथा स्पन्दस्व कर्मसु ॥ २५ ॥ (६।१।१५)
स्पन्दस्वाकृतसंकल्पं सुखदुःखान्यभावयन् ।
प्रवाहपतिते कार्ये चेष्टितोन्मुक्तशष्पवत् ॥ २६ ॥ (६।१।१७)
रसभावनमन्तस्ते मास्तु भवतु कर्मसु ।
दारुयन्त्रमयस्येव परार्थमिव कुर्वतः ॥ २७ ॥ (६।१।१८)
नीरसा एव ते सन्तु समस्तेन्द्रियसंविदः । (६।१।१९)
चिदानन्दरसान्येव प्रवृत्तान्यपि धारय ॥ २८ ॥ (६।१।२१)
अवासनमसंकल्पं यथाप्राप्तानुवृत्तिमान् ।
शनैश्चक्रभ्रमाभोग इव स्पन्दस्व कर्मसु ॥ २९ ॥ (६।१।२५)

[८] आर्यलक्षणम् :—

कर्तव्यमाचरन्काममकर्तव्यमनाचरन् ।
तिष्ठति प्राकृताचारो यः स आर्य इति स्मृतः ॥१॥(६।१२६।५४)
यथाचारं यथाशास्त्रं यथाचित्तं यथास्थितम् ।
व्यवहारमुपादत्ते यः स आर्य इति स्मृतः ॥२॥ (६।१२६।५५)



## ७—आत्मानुभवः

### [१] आत्मानुभवोदयलक्षणानि :—

जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ।
मननं त्यजतो ज्ञात्वा किञ्चित्परिणतात्मनः ॥ १ ॥ (४।२२।१)
दृश्यं संत्यजतो हेयमुपादेयमुपेयुषः ।
द्रष्टारं पश्यतो दृश्यमद्रष्टारमपश्यतः ॥ २ ॥ ( ४।२२।२ )
जागर्तव्ये परे तत्त्वे जागरूकस्य जीवतः ।
सुप्तस्य घनसंमोहमये संसारवर्त्मनि ॥ ३ ॥ (४।२२।३)
पर्यन्तात्यन्तवैराग्यात्सरसेष्वरसेष्वपि ।
भोगेष्वाभोगरम्येषु विरक्तस्य निराशिषः ॥ ४ ॥ (४।२२।४)
संसारवासनाजाले खगजाल इवाखुना ।
त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ ५ ॥ (४।२२।७)
कातकं फलमासाद्य यथा वारि प्रसीदति ।
तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ ६ ॥ (४।२२।८)
नीरागं निरुपासङ्गं निर्द्वन्द्वं निरुपाश्रयम् ।
विनिर्याति मनो मोहाद्विहगः पञ्जरादिव ॥ ७ ॥ ( ४।२२।९)
शान्ते संदेहदौरात्म्ये गतकौतुकविभ्रमम् ।
परिपूर्णान्तरं चेतः पूर्णेन्दुरिव राजते ॥ ८ ॥ (४।२२।१०)
जनितोत्तमसौन्दर्या दूरादस्तमयोन्नता ।

समतोदेति सर्वत्र शान्ते वात इवार्णवे ॥ ९ ॥ (४।२२।११)
अन्धकारमयी मूका जाड्यजर्जरितान्तरा ।
तनुत्वमेति संसारवासनेवोदये क्षपा ॥ १० ॥ (४।२२।१२)
दृष्टचिद्भास्करा प्रज्ञा पद्मिनी पुण्यपल्लवा ।
विकसत्यमलोद्योता प्रातर्द्यौरिव रूपिणी ॥११॥ (४।२२।१३)
प्रज्ञाहृदयहारिण्यो भुवनाह्लादनक्षमाः ।
सत्त्वलब्धाः प्रवर्धन्ते सकलेन्दोरिवांशवः ॥१२॥ (४।२२।१४)
तरङ्गवदिमे लोकाः प्रयान्त्यायान्ति चेतसः ।
क्रोडीकुर्वन्ति चाज्ञं ते न ज्ञं मरणजन्मनी ॥१३॥ (४।२२।१८)
विवेक उदिते शीते मिथ्या भ्रममरूदिता ।
क्षीयते वासना साग्रे मृगतृष्णा मराविव ॥१४॥ (४।२२।२१)

### [२] आत्मस्वरूपे स्थितिः :—

अर्थादर्थान्तरं चित्ते याति मध्ये हि या स्थितिः ।
निरस्तमनना यासौ स्वरूपस्थितिरुच्यते ॥१॥ (३।११७।८)
संशान्तसर्वसङ्कल्पा या शिलान्तरिव स्थितिः ।
जाड्यनिद्राविनिर्मुक्ता सा स्वरूपस्थितिः स्मृता ॥२॥(३।११७।९)
अहतांशे क्षते शान्ते भेदे निस्पन्दतां गते ।
अजडा या प्रकचति तत्स्वरूपमिति स्थितम् ॥३॥ (३।११७।१०)

### [३] आत्मानुभूतेरनुपमेयत्वम् :—

अहंकारे परिक्षीणे यावस्था सुखमोदजा ।

सावस्था भरिताकारा सा सेव्या संप्रयत्नतः ॥१॥ (५।६४।४७)

परिपूर्णार्णवप्रख्या न वा गोचरमेति नः ।
नोपमानमुपादत्ते नानुधावति रञ्जनम् ॥ २ ॥ ( ५।६४।४८ )

केवलं चित्प्रकाशांशकलिका स्थिरतां गता ।
तुर्या चेत्प्राप्यते दृष्टिस्तत्तया सोऽमीयते ॥३॥ ( ५।६४।४९ )

अदूरगतसादृश्यात्सुषुप्तस्योपलक्ष्यते ।
सावस्था भरिताकारा गगनश्रीरिवातता ॥४॥ ( ५।६४।५० )

मनोऽहंकारविलये सर्वभावान्तरस्थिता ।
समुदेति परानन्दा या तनुः पारमेश्वरी ॥ ५ ॥ (५।६४।५१)

सा स्वयं योगसंसिद्धा सुषुप्ता दूरभाविनी ।
न गम्या वचसां राम हृद्येवेहानुभूयते ॥ ६ ॥ ( ५।६४।५२ )

अनुभूतिं विना तत्त्वं खण्डादेर्नानुभूयते ।
अनुभूतिं विना रूपं नात्मनश्चानुभूयते ॥ ७ ॥ ( ५।६४।५३ )

आत्मज्ञानविदो यान्ति यां गतिं गतिकोविदाः ।
पण्डितास्तत्र शक्रश्रीर्जरत्तृणलवायते ॥ ८ ॥ ( ६/२।१४३।२ )

पाताले भूतले स्वर्गे सुखमैश्वर्यमेव वा ।
न तत्पश्यामि यन्नाम पाण्डित्यादतिरिच्यते ॥९॥ (६/२।१४३।३)

[४] परमार्थानुभवे मनसोऽभावः :—

अविद्यत्वादचित्तत्वान्मायात्वाच्चासदेव हि ।
ध्रुवं नास्त्येव वा चित्तं भ्रमादन्यत्खवृक्षवत् ॥१॥ (५।८१।३)

चक्रारोहभ्रमस्यान्ते पर्वतस्पन्दनं यथा ।
मौर्ख्यमोहभ्रमे शान्ते चित्तं नोपलभामहे ॥२॥ (५।८१।५)

मृतं चित्तं गता तृष्णा प्रक्षीणो मोहपञ्जरः ।
निरहंकारता जाता जाग्रत्यस्मिन्प्रबुद्धवान् ॥३॥ (५।८१।६)

परमार्थफले ज्ञाते भुक्तौ परिणतिं गते ।
बोधोऽप्यसद्भवत्याशु परमार्थो मनोमृगः ॥ ४ ॥ (६/२।४६।१)

क्वापि सा मृगता याति प्रक्षीणस्नेहदीपवत् ।
परमार्थदशैवास्ते तत्रानन्तावभासिनी ॥ ५ ॥ (६/२।४६।२)

मनस्ता क्वापि संयाति तिष्ठत्यच्छैव बोधता ।
निर्बाधा निर्विभागा च सर्वाऽखर्वात्मिका सती॥६॥(६/२।४६।४)

सुविविक्ततया चित्तसत्ता बोधतयोदिता ।
अनाद्यन्ता भवत्यच्छप्रकाशफलदायिनी ॥७॥ (६/२।४६।५)

स्वयमेव ततस्तत्र निरस्तसकलैषणम् ।
अनाद्यन्तमनायासं ध्यानमेवावशिष्यते ॥ ८ ॥ (६/२।४६।६)

परमार्थैकतामेत्य न जाने क्व मनो गतम् ।
क्व वासना क्व कर्माणि क्व हर्षामर्षसंविदः ॥ ९ ॥ (६/२।४६।८)

## [५] नाविद्यायाः पुनर्निवर्तनम् :—

क्षीणे स्वहृदयग्रन्थौ न बन्धोऽस्ति पुनर्गुणैः ।
यत्नेनापि पुनर्बद्धं केन वृन्ते च्युतं फलम् ॥ १ ॥ (५।७४।७५)

परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।

तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ २ ॥ ( ५।७४।८३ )
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
न शक्यते चालयितुं देवैरपि सवासवैः ॥३॥ ( ४।७४।८४ )
अविद्या संपरिज्ञाता न चैनं परिकर्षति ।
मृगतृष्णा परिज्ञाता तर्षुलं नावकर्षति ॥ ४ ॥ ( ५।७४।२० )
अविद्या संपरिज्ञाता यदैव हि तदैव हि ।
सा परिक्षीयते भूयः स्वप्नेनेव हि भोगभूः ॥५॥ (५।६४।१३)

[ ६ ] परमा तृप्तिः :—

मोक्षमिच्छाम्यहं कस्माद्बद्धः केनास्मि वै पुरा ।
अबद्धो मोक्षमिच्छामि केयं बालविडम्बना ॥१॥ (५।२६।१०)
न बन्धोऽस्ति न मोक्षोऽस्ति मौर्ख्यं मे क्षयमागतम् ।
किं मे ध्यानविलासेन किं वा ध्यानेन मे भवेत् ॥२॥(५।२६।११)
ध्यानाध्यानभ्रमौ त्यक्त्वा पुंस्त्वं स्वमवलोकयत् ।
यदायाति तदायातु न मे वृद्धिर्न वा क्षयः ॥३॥ (५।२६।१२)
न ध्यानं नापि वाऽध्यानं न भोगान्नाप्यभोगिताम् ।
अभिवाञ्छामि तिष्ठामि सममेव गतज्वरः ॥४॥ ( ५।२६।१३ )
न मे वाञ्छा परे तत्त्वे न मे वाञ्छा जगत्स्थितौ ।
न मे ध्यानदशाकार्यं न कार्यं विभवेन मे ॥५॥ (५।२६।१४)
नाहं मृतो न जीवामि न सन्नासन्न सन्मयः ।
नेदं मे नैव चान्यन्मे नमो मह्यमहं बृहत् ॥६॥ ( ५।२६।१५ )
इदमस्तु जगद्राज्यं तिष्ठाम्यत्र तु संस्थितः ।

नेह वास्तु जगद्राज्यं तिष्ठाम्यात्मनि शीतलः ॥७॥(५।२६।१६)

किं मे ध्यानदशा कार्यं किं राज्यविभवश्रिया ।

यदायाति तदायातु नाहं किञ्चन मे क्वचित् ॥८॥(५।२६।१७)

न किंचिदपि कर्तव्यं यदि नाम मयाधुना ।

तत्कस्मान्न करोमीदं किञ्चित्प्रकृतकर्म वै ॥६॥ (५।२६।१८)

न मे भोगस्थितौ वाञ्छा न च भोगविवर्जने । ( ५।३५।३८ )

अस्ति सर्वत्र मे स्वर्गो नियतो नतु कुत्रचित्॥१०॥ (६/१०७।२६)

यदायाति तदायातु यत्प्रयाति प्रयातु तत् ।

सुखेषु मम नापेक्षा नोपेक्षा दुःखवृत्तिषु ॥११॥ (५।३५।३६)

सुखदुःखान्युपायान्तु यान्तु वाप्यहमेषु कः ।

वासना विविधा देहे त्वस्तं चोदयमेव वा ॥१२॥ (५।३५।४०)

देहस्याहमहं देहोति क्षीणे चित्तविभ्रमे ।

त्यजामि न त्यजामीति किं मुधा कलनोदिता॥१३॥(५।४०।१२)

प्राप्तानुत्तमविश्रान्तिर्लब्धालभ्यपरास्पदः ।

अनिवृत्तिपदं प्राप्तो मनसा कर्मणा गिरा ॥ १४ ॥ (५।७४।३५)

सर्वत्रैव हि तुष्यामि सर्वत्रैव रमे प्रभो ।

अवाञ्छनत्वान्मनसः सर्वत्रानन्दवानहम् ॥१५॥ (६/१०७।२७)

इदं सुखं इदं नेति मिथुने क्षयमागते ।

सममेव पदे शान्ते तिष्ठामीह यथासुखम् ॥१६॥ (६/१०६।७०)

## ८—जीवन्मुक्तिः

[ १ ] जीवन्मुक्तलक्षणानि :—

न सुखाय सुखं यस्य दुःखं दुःखाय यस्य नो ।
अन्तर्मुखमतेर्नित्यं स मुक्त इति कथ्यते ॥ १ ॥ ( ६।१९९।१ )
सुखदुःखेषु भीमेषु संततेषु महत्स्वपि ।
मनागपि न वैरस्यं प्रयान्ति समदृष्टयः ॥ २ ॥ ( ६।१९८।२७ )
यस्य कस्मिंश्चिदप्यर्थे क्वचिद्रसिकतास्ति नो ।
व्यवहारवतोऽप्यन्तः स विश्रान्त उदाहृतः ॥३॥ ( ६।१९९।८ )
यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
यथाप्राप्तं विहरतः स विश्रान्त इति स्मृतः ॥४॥ ( ६।१९९।९ )
नालम्बते रसिकतां न च नीरसतां क्वचित् ।
नार्थेषु विचरत्यर्थी वीतरागः सरागवत् ॥ ५ ॥ (६।१०२।१३)
उद्विजन्तेऽपि नो लोकाल्लोकान्नोद्वेजयन्ति च । (६।९८।२)
तेषां तनुत्वमायान्ति लोभमोहादयोऽरयः ॥ ६ ॥ ( ६।९८।१ )
मनोज्ञमधुराचाराः प्रियपेशलवादिनः । ( ६।९८।३ )
विवेचितारः कार्याणां निर्णेतारः क्षणादपि ॥७॥ (६।९८।४ )
अनुद्वेगकराचारा बान्धवा नागरा इव
बहिः सर्वसमाचारा अन्तः सर्वार्थशीतलाः ॥८॥ ( ६।९८।५ )
उपेक्षते न सम्प्राप्तं नाप्राप्तमभिवाञ्छति ।

सोम्यसौम्यो भवत्यन्तः शीतलः सर्ववृत्तिषु ॥९॥ (६।४५।१०)
प्रवाहपतिते कार्ये कामसंकल्पवर्जितः ।
तिष्ठत्याकाशहृदयो यः स पण्डित उच्यते ॥१०॥ (६।२२।५)
वर्णधर्माश्रमाचारशास्त्रयन्त्रणयोज्झितः ।
निर्गच्छति जगज्जालात्पञ्जरादिव केसरी ॥११॥( ६।१२२।२)
सर्वकर्मफलत्यागी नित्यतृप्तो निराश्रयः ।
न पुण्येन न पापेन लिप्यते नेतरेण च ॥१२॥ ( ६।१२२।५ )
वासनाग्रन्थयश्छिन्ना इव त्रुट्यन्त्यलं शनैः ।
कोपस्तानवमायाति मोहो मान्द्यं हि गच्छति ॥१३॥ (६।११६।४)
मुदिताद्याः श्रियो वक्रं न मुञ्चन्ति कदाचन । ( ६।११६।३ )
न निन्दन्ति न नन्दन्ति जीवितं मरणं तथा ॥१४॥ (६।१२।२)
केषुचिन्नानुवध्नाति तृप्तमूर्तिरसक्तधीः । ( ५।९३।३९ )
जीवन्मुक्तो गतासङ्गः सम्राडात्मैव तिष्ठति ॥१५॥ (५।९३।२४)
परिपूर्णमना मानी मौनी शत्रुषु चाचलः । ( ५।९३।३९ )
सम्पत्स्वापत्सु चोग्रासु रमणोपूत्सवेषु च ॥१६॥( ५।९३।५२)
विहरन्नापि नोद्वेगी नानन्दमुपगच्छति ।
अन्तर्मुक्तमना नित्यं कर्मकर्तैव तिष्ठति ॥ १७ ॥ ( ५।९३।५३ )
न बिभेति न वादत्ते वैवश्यं नच दीनताम् ।
समः स्वस्थमना मौनी धारस्तिष्ठति शैलवत् ॥१८॥ (५।९३।५५)
आत्मवानिह सर्वस्मादतीतो विगतैषणः ।
आत्मन्येव हि संतुष्टो न करोति न चेहते ॥ १९ ॥ (५।८९।१६)
न तस्यार्थो नभोगत्या न सिद्ध्या न च भोगकैः ।

न प्रभावेण नो मानैर्नाशामरणजीवितैः ॥२०॥(५।८६।१८)
समग्रसुखभोगात्मा सर्वाशास्विव संस्थितः ।
करोत्यखिलकर्माणि त्यक्तकर्तृत्वविभ्रमः ॥२१॥ (५।७७।११)
उदासीनवदासीनः प्रकृतः क्रमकर्मसु ।
नाभिवाञ्छति न द्वेष्टि न शोचति न हृष्यति ॥२२॥ (५।७७।१२)
अनुबन्धपरे जन्तावसंसक्तेन चेतसा ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥२३॥ (५।७७।१३)
बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखितेष्वनुदुःखितः ॥२४॥ (५।७७।१४)
न तस्य सुकृतेनार्थो न भोगैर्न च कर्मभिः ।
न दुष्कृतैर्न भोगानां संत्यागेन न बन्धुभिः ॥२५॥ (५।७७।१८)
सर्वं सर्वप्रकारेण गृह्णाति च जहाति च ।
अनुपादेयसर्वार्थो बालवच्च विचेष्टते ॥ २६ ॥ ( ५।७७।२५ )
स तिष्ठन्नपि कार्येषु देशकालक्रियाक्रमैः ।
न कार्यसुखदुःखाभ्यां मनागपि हि गृह्यते ॥२७॥ (५।७७।२६)
न कदाचन दीनात्मा नोद्धतात्मा कदाचन ।
न प्रमत्तो न खिन्नात्मा नोद्विग्नो न च हर्षवान् ॥२८॥ (५।७७।३२)
अयत्नोपनतं सर्वं लीलयासक्तमानसः ।
भुङ्क्ते भोगभरं प्राज्ञस्त्वालोकमिव लोचनम् ॥२९॥(५।७४।६३)
सर्वशत्रुषु मध्यस्थो दयादाक्षिण्यसंयुतः । ( ५।१८।६ )
रागद्वेषैः स्वरूपज्ञो नावशः परिकृष्यते ॥ ३० ॥ ( ५।७४।६१ )
इमं विश्वपरिस्पन्दं करोमीत्यस्तवासनम् ।

प्रवर्तते यः कार्येषु स मुक्त इति मे मतिः ॥ ३१ ॥ ( ५।६।१ )

यः कुर्वन्सर्वकार्याणि पुष्टे नष्टेऽथ तत्फले ।
समः सन्सर्वकार्येषु न तुष्यति न शोचति ॥ ३२ ॥ (५।६।१०)

अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
आगतानां च सम्भोग इति पण्डितलक्षणम् ॥३३॥ (४।४६।८)

न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् ।
सर्वमेवानुवर्तन्ते पारावारविदो जनाः ॥ ३४ ॥ ( ४।४६।२६ )

विगतेच्छा यथाप्राप्तव्यवहारानुवर्तिनः ।
विचरन्ति समुन्नद्धाः स्वस्था देहरथे स्थिताः ॥३५॥ (४।४६।२९)

बोधैकनिष्ठतां यातो जाग्रत्येव सुषुप्तवत् ।
य आस्ते व्यवहर्तैव जीवन्मुक्त स उच्यते ॥ ३६ ॥ ( ३।९।५ )

शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥३७॥ (३।९।१२)

यस्य नाहंकृतो भावो यस्य बुद्धिर्न लिप्यते ।
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ३८ ॥ ( ३।९।९ )

पुत्रदारसमग्राणि मित्राणि च धनानि च ।
जन्मान्तरकृतानीव स्वप्नजानीव पश्यति ॥३९॥ (६।४९।१४)

न स चेतयते काश्चिल्लोकदारधनैषणाः ।
अपूर्वपदविश्रान्तो जीवन्नेव यथा शवः ॥ ४० ॥ (६।४५।१७)

आपत्सु यथाकालं सुखदुःखेष्वनारतम् ।
न हृष्यति ग्लायति यः स मुक्त इति कथ्यते ॥४१॥ (५।१६।१८)

ईप्सितानीप्सिते न स्तो यस्येष्टानिष्टवस्तुषु ।

सुषुप्तवदुच्चरति यः स मुक्त इति होच्यते ॥ ४२ ॥( ५।१६।१६ )
हेयोपादेयकलने ममेत्यहमिहेति च ।
यस्यान्तः संपरिक्षीणे स जीवन्मुक्त उच्यते ॥४३॥ (५।१६।२०)
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥४४॥(५।१६।२१)
सर्वप्रकृतकार्यस्थो मध्यस्थः सर्वदृष्टिषु ।
ध्येयं तं वासनात्यागमवलम्ब्य व्यवस्थितः ॥४५॥ (५।१८।३)
सर्वत्र विगतोद्वेगः सर्वार्थपरिपोषकः ।
विवेकोद्यतदृष्टात्मा प्रबोधोपवनस्थितिः ॥ ४६ ॥ (५।१८।४)
सर्वातीतपदालम्बी पूर्णेन्दुशिशिराशयः ।
नोद्वेगी न च तुष्टात्मा संसारे नावसीदति ॥४७॥ (५।१८।५)
सङ्गरङ्गविनिष्क्रान्तः शान्तमानमनोज्वरः ।
अध्यात्मरतिरासीनः पूर्णः पावनमानसः ॥४८॥ (५।७४।३३)
निर्मृष्टकामपङ्काङ्कश्छिन्नबन्धनिजभ्रमः ।
द्वन्द्वदोषभयोन्मुक्तस्तीर्णसंसारसागरः ॥ ४९ ॥ (५।७४।३४)
सर्वाभिवाञ्छितारम्भो न किञ्चिदपि वाञ्छति ।
सर्वानुमोदितानन्दो न किञ्चिदनुमोदते ॥५०॥ ( ५।७४।३६ )
सर्वारम्भपरित्यागी सर्वोपाधिविवर्जितः ।
सर्वाशासम्परित्यागी जीवन्मुक्त इति स्मृतः ॥५१॥(५।७४।३८)
जीवन्मुक्ता न सज्जन्ति सुखदुःखरसस्थितौ ।
प्रकृतेनाथकार्याणि किञ्चित्कुर्वन्ति वा नवा॥५२॥(३।११८।१८)
आत्मारामतया तांस्तु सुखयन्ति न काश्चन ।

जगत्क्रियाः सुसंसुप्तान्रूपालोकाः स्त्रियो यथा॥५३॥(३।११८।२०)
नाभिनन्दन्ति सम्प्राप्तं नाप्राप्तमभिशोचति ।
केवलं विगताशङ्कं सम्प्राप्तमनुवर्तते ॥ ५४ ॥ ( ३।१२२।१४ )
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथाप्राप्तस्थितेर्यस्य जीवन्मुक्तः स उच्यते ॥५५॥ ( ३।९।६ )
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदच्छस्थः स जीवन्मुक्त उच्यते ॥५६॥ (३।९।८)
यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
पदार्थेष्वपि पूर्णात्मा स जीवन्मुक्त उच्यते ॥५७॥ (३।९।१३)

[२] जीवन्मुक्तस्य किमपि हेयोपादेयं नास्ति :—

हेयोपादेयदृष्टी द्वे यस्य क्षीणे हि तस्य वै ।
क्रियात्यागेन कोऽर्थः स्यात्क्रियासंश्रयणेन वा॥ १ ॥(६/२।१९९।२)
न तदस्तीह यत्त्याज्यं ज्ञस्योद्वेगकरं भवेत् ।
न चास्ति यदुपादेयं तज्ज्ञसंश्रेयतां गतम् ॥ २ ॥ (६/२।१९९।३)
ज्ञस्य नार्थः कर्मत्यागैर्नार्थः कर्मसमाश्रयैः ।
तेन स्थितं यथा यद्यत्तत्तथैव करोत्यसौ ॥ ३ ॥ ( ६/२।१९९।४ )
नित्यं प्रबुद्धचित्तास्तु कुर्वन्तोऽपि जगत्क्रियाः ।
आत्मैकतत्त्वसन्निष्ठाः सदैव सुसमाधयः ॥ ४ ॥ ( ५।६२।६ )
काकतालीयवद्रूढां क्रियां कुर्वन्ति ते सदा ।
न कुर्वन्त्यपि वै किञ्चिन्नैषां क्वचिदपि ग्रहः ॥५॥ (६/२।६९।१)
रूपालोकमनस्कारान्कुर्वन्नपि न किञ्चन ।

ज्ञः करोत्यनुपादेयान्न ज्ञस्यैव हि कर्तृता ॥ ६ ॥ ( ६।२।१२ )

यस्मादात्मनो व्यतिरिक्ते वस्तुनि सिद्धे सति तत्रेच्छा प्रवर्तते । यत्र स्वात्मनो व्यतिरिक्तं न किञ्चिदपि सम्भवति तत्रात्मा किमिव वाञ्छन्किमनुसमरन्धावतु किमुपैतु ॥७॥ ( ४।३७।१० )

अत इदमीहितमिदमनीहितमित्यात्मानं न स्पृशन्ति विकल्पाः । अतो निरिच्छतायामात्मा न किञ्चिदपि करोति कर्तृकरणकर्मणामेकत्वात् नच निरिच्छस्यात्मनो नैष्कर्म्यमभिमतम् , द्वितीयाया कल्पनाया अभावात् ॥ ८ ॥ ( ४।३७।११ )

[ २ ] जीवन्मुक्तो महाकर्ता :—

धर्माधर्मौ महाभाग शङ्काविरहिताशयः ।
यः करोति यथाप्राप्तौ महाकर्ता स उच्यते ॥१॥ (६।११५।११)
रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्षेण महाकर्ता स उच्यते ॥२॥ ( ६।११५।१२)
मौनवान्निरहंभावो निर्मलो मुक्तमत्सरः ।
यः करोति गतोद्वेगं महाकर्ता स उच्यते ॥३॥ (६।११५।१३)
शुभाशुभेषु कार्येषु धर्माधर्मौ कुशङ्कया ।
मतिर्न लिप्यते यस्य महाकर्ता स उच्यते ॥४॥ (६।११५।१४)
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचते यो नोदेति महाकर्ता स उच्यते ॥५॥ ( ६।११५।१६ )
उदासीनः कर्तृतां च कर्माकर्माचरंश्च यः ।
समं यात्यन्तरत्यन्तं महाकर्ता स उच्यते ॥६॥ (६।११५।१८ )

स्वभावेनैव यः शान्तः समतां न जहाति वै ।
शुभाशुभं ह्याचरन्यो महाकर्ता स उच्यते ॥७॥ (६।११५।१९)
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ।
सममेव मनो यस्य महाकर्ता स उच्यते ॥८॥ ( ६।११५।२० )

[ ३ ] जीवन्मुक्तो व्यवहार्यपि समाधिस्थः :—

व्यवहारी प्रबुद्धो यः प्रबुद्धो यो वने स्थितः ।
द्वावेतौ सुसमौ नूनमसंदेहं पदं गतौ ॥१॥ ( ५।५६।१२ )
अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम् ।
दूरंगतमना जन्तुः कथासंश्रवणे यथा ॥ २ ॥ ( ५।५६।१३ )
अकुर्वदपि कर्तैव चेतः प्रघनवासनम् ।
निस्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥३॥ (५।५६।१४)
चेतसो यदकर्तृत्वं तत्समाधानमुत्तमम् ।
तं विद्धि केवलीभावं सा शुभा निर्वृत्तिः परा॥ ४॥(५।५६।१५)
गृहमेव गृहस्थानां सुसमाहितचेतसाम् ।
शान्ताहंकृतिदोषाणां विजना वनभूमयः ॥ ५ ॥ (५।५६।२२)
अरण्यसदने तुल्ये समाहितमनोदृशाम् । ( ५।५६।२३ )
अन्तः शीतलतायां तु लब्धायां शीतलं जगत् ॥६॥(५।५६।३३)
सर्वभावपदातीतं सर्वभावात्मकं च वा ।
यः पश्यति सदात्मानं स समाहित उच्यते ॥७॥ ( ५।५६।२७ )
स सर्वगतमात्मानं पश्यन्समुपशान्तधीः ।
न शोचति ध्यायति वा स समाहित उच्यते ॥८॥ (५।५६।४४)

ईदृशाशयसम्पन्नो महासत्त्वपदं गतः ।
तिष्ठतूदेतु वा यातु मृतिमेतु न तत्स्थितिम् ॥६॥ (५।५६।५१)
वसतूत्तमभोगाढये स्वगृहे वा जनाकुले ।
सर्वभोगोज्झिताभोगे सुमहत्यथवा वने ॥१०॥ (५।५६।५२)
उद्दाममन्मथं पानतत्परो वापि नृत्यतु ।
सर्वसङ्गपरित्यागी सममायातु वा गिरौ ॥११॥ (५।५६।५३)
चन्दनागुरुकर्पूरैर्वपुर्वा परिलिम्पतु ।
ज्वालाजटिलविस्तारे निपतत्वथवाऽनले ॥१२॥ (५।५६।५४)
पापं करोति सुमहद्बहुलं पुण्यमेव च ।
अद्य वा मृतिमायातु कल्पान्तनिचयेन वा ॥ १३ ॥(५।५६।५५)
नासौ किञ्चिन्न तत्किञ्चित्कृतं तेन महात्मना ।
नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥१४॥ (५।५६।५६)

[५] जीवन्मुक्तो महाभोक्ता :—

न वाञ्छता न त्यजता दैवप्राप्ताः स्वभावतः ।
सरितः सागरेणेव भोक्तव्या भोगभूमयः ॥ १ ॥ (६।३९।५१)
अयत्नोपनतं सर्वं लीलयासक्तमानसः ।
भुंक्ते भोगभरं प्राज्ञस्त्वालोकमिव लोचनम् ॥२॥ (५।७४।६३)
काकतालीयवत्प्राप्ता भोगाली ललनादिका ।
स्वादिताप्यङ्ग धीरस्य न दुःखाय न तुष्टये॥३॥( ५।७४।६४ )
अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
आगतानां च सम्भोग इति पण्डितलक्षणम् ॥४॥ ( ४।४६।८ )

न किञ्चन द्वेष्टि तथा न किञ्चिदभिकांक्षति ।
भुंक्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते ॥५॥ (६।११५।२१)
नादत्तेऽप्याददानश्च नाचरत्याचरन्नपि ।
भुञ्जानोऽपि न यो भुंक्ते महाभोक्ता स उच्यते ॥ (६।११५।२२)
साक्षिवत्सकलं लोकव्यवहारमखिन्नधीः ।
पश्यत्यपगतेच्छं यो महाभोक्ता स उच्यते ॥७॥( ६।११५।२३ )
जरामरणमापच्च राज्यं दारिद्र्यमेव च ।
रम्यमित्येव यो वेत्ति महाभोक्ता स उच्यते॥८॥ (६।११५।२५)
महान्ति सुखदुःखानि यः पयांसीव सागरः ।
समं समुपगृह्णाति महाभोक्ता स उच्यते ॥९॥ ( ६।११५।२६ )
कट्वम्ललवणं तिक्तममृष्टं मृष्टमुत्तमम् ।
अधमं योऽत्ति साम्येन महाभोक्ता स उच्यते ॥१०॥ (६।११५।२८)
सरसं नीरसं चैव सुरतं विरतं तथा ।
यः पश्यति सम् सौम्यो महाभोक्ता स उच्यते ॥११॥(६।११५।२९)
क्षारे खण्डप्रकारे च शुभे वाप्यशुभे तथा ।
समता सुस्थिरा यस्य महाभोक्ता स उच्यते ॥१२॥(६।११५।३०)
इदं भोज्यमभोज्यं चेत्येवं त्यक्त्वा विकल्पितम् ।
गताभिलाषं यो भुङ्क्ते महाभोक्ता स उच्यते॥१३॥(६।११५।३१)
आपदं सम्पदं मोहमानन्दमपरं परम् ।
यो भुङ्क्ते समया बुद्ध्या महाभोक्ता स उच्यते॥१४॥(६।११५।३२)

[६] जीवन्मुक्तस्य शरीरनगरीराज्यम् :—

स उत्तमपदालम्बी चक्रभ्रमवदास्थितः ।
शरीरनगरीराज्यं कुर्वन्नपि न लिप्यते ॥ १ ॥ ( ४।२३।१ )
तस्येयं भोगमोक्षार्थं तज्ज्ञस्योपवनोपमा ।
सुखायैव न दुःखाय स्वशरीरमहापुरी ॥ २ ॥ ( ४।२३।२ )
रम्येयं देहनगरी राम सर्वगुणान्विता ।
ज्ञस्यानन्तविलासाढ्या स्वालोकार्कप्रकाशिता ॥३॥ (४।२३।४)
स्वशरीरमनोज्ञस्य सर्वसौभाग्यसुंदरी ।
सुखायैव न दुःखाय परमाय हिताय च ॥ ४ ॥ (४।२३।१७)
अज्ञस्येयमनन्तानां दुःखानां कोशमालिका ।
ज्ञस्य त्वियमनन्तानां सुखानां कोशमालिका॥५॥ (४।२३।१८)
तृष्णासारपरावर्ते कामसंभोगदुर्ग्रहे ।
न निमज्जति पर्यस्तः सुखदुःखमदेवने ॥६॥ (४।२३।२६)
सुखावहैषा नगरी नित्यं वै विदितात्मनः ।
भोगमोक्षप्रदा चैषा शक्रस्येवामरावती ॥७॥ (४।२३।२६)
अत्रस्थः पुरुषो भोगानात्मा सर्वगतोऽपि सन् ।
विश्वकल्पकृतान्भुक्त्वा पुंसामधिगतार्थभाक् ॥८॥ (४।२३।३३)
इन्द्रियाणां न हरति प्राप्तमर्थं कदाचन ।
नाददाति तथा प्राप्तं संपूर्णो ज्ञोऽवतिष्ठते ॥९॥ (४।२३।४५)
स्वाश्रयं प्रथमं देहं कृतघ्ना नाशयन्ति ये ।
ते कुकार्यमहाकोशा दुर्जयाः स्वेन्द्रियारयः ॥१०॥ (४।२४।२)
विवेकतन्तुजालेन गृहीता येन ते शठाः ।
तस्याङ्गानि न लुम्पन्ति पाशा नागबलं यथा ॥११॥ (४।२४।४)

## [ ७ ] यथाप्राप्तास्ववस्थासु जीवन्मुक्तानां स्थितिः :-

यावद्देहमवस्थासु समचित्ततयैव ये ।
कर्मेन्द्रियैर्न तिष्ठन्ति न ते तत्त्वविदः शठाः ॥१॥ (६।१०४।४०)
ये ह्यतत्त्वविदो मूढा राजन्बालतयैव ते ।
अवस्थाभ्यः पलायन्ते गृहीताभ्यः स्वभावतः ॥२॥ (६।१०४।४१)
यावत्तिलं यथा तैलं यावद्देहं तथा दशा ।
यो न देहदशामेति स च्छिनत्त्यसिनाम्बरम् ॥३॥ (६।१०४।४२)
एष देहदशादुःखपरित्यागो ह्यनुत्तमः ।
यत्साम्यं चेतसो योगान्नतु कर्मेन्द्रियस्थितेः ॥४॥ (६।१०४।४३)
यावद्देहं यथाचारं दशास्वङ्ग विजानता ।
कर्मेन्द्रियैर्हि स्थातव्यं नतु बुद्धीन्द्रियैः क्वचित् ॥ (६।१०४।४४)
क्रमप्रवृत्तमास्पृष्टेः सुखं साध्यं मनोरमम् ।
प्रकृतं कुर्वतः कार्यं दोषः क इव जायते ॥ ६ ॥ (६।१०६।६)

## [ ८ ] व्यवहारे बुद्धाबुद्धयोः समानता :--

व्यवहारे यथैवाज्ञस्तथैवाखिलपण्डितः ।
वासनामात्रभेदोऽत्र कारणं बन्धमोक्षदम् ॥१॥ (४।१५।३७)
यावच्छरीरं तावद्धि दुःखे दुःखं सुखे सुखम् ।
असंसक्तधियो धीरा दर्शयन्त्यप्रबुद्धवत् ॥२॥ (४।१५।३८)
मुक्तबुद्धीन्द्रियो मुक्तो बद्धकर्मेन्द्रियोऽपि हि ।
बद्धबुद्धीन्द्रियो बद्धो मुक्तकर्मेन्द्रियोऽपि हि ॥३॥ (४।१५।४२)

सुखदुःखदृशो लोके बन्धमोक्षदृशस्तथा ।
हेतुर्बुद्धीन्द्रियाण्येव तेजांसीव प्रकाशने ॥ ४ ॥ (४।१५।४३)

[९] जीवन्मुक्तचित्तम् :—

मूढं चित्तं चित्तमाहुः प्रबुद्धं सत्त्वमुच्यते । ( ६।१०१।३१ )
भूयः प्रजायते चित्तं सत्त्वं भूयो न जायते ॥१॥ (६।१०१।३२)

आत्मविदां हि तन्मनः परमुपशममागतं मृगतृष्णाजलमिव वर्षति जलदे हिमकणा इव चण्डातपे विलीनं तुर्यदशामुपागतं स्थितम् ॥२॥ (४।३८।६)

भृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥३॥ (५।४२।१४)
जीवन्मुक्ता महात्मानो ये परावरदर्शिनः ।
तेषां या चित्तपदवी सा सत्त्वमिति कथ्यते ॥ ४ ॥ (६।२।४२)
जीवन्मुक्तशरीरेषु वासना व्यवहारिणी ।
न चित्तनाम्नी भवति सा हि सत्त्वपदं गता ॥ ५ ॥ (६।२।४३)
निश्चेतसो हि तत्त्वज्ञा नित्यं समपदे स्थिताः ।
लीलया प्रभ्रमन्तीह सत्त्वसंस्थितिहेलया ॥ ६ ॥ (६।२।४४)
विवेकविशदं चेतः सत्त्वमित्यभिधीयते ।
भूयः फलति नो मोहं दग्धबीजमिवाङ्कुरम् ॥७॥ (६।२।४७)
अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम् ।
जुह्वतोऽन्तर्निवर्तन्ते मुनेश्चित्तादिविभ्रमाः ॥ ८ ॥ (६।२।४६)

[१०] तत्त्वज्ञानसिद्धिर्व्योमगमनादिसिद्धेर्भिन्ना :—

तत्त्वज्ञो वाप्यतत्त्वज्ञो यः कालद्रव्यकर्मभिः ।
यथाक्रमं प्रयतते तस्योर्ध्वत्वादि सिद्ध्यति ॥१॥ (५।८६।१६)
आत्मवानिह सर्वस्मादतीतो विगतैषणः ।
आत्मन्येव हि संतुष्टो न करोति न चेहते ॥२॥ (५।८६।१७)
न तस्यार्थो नभोगत्या न सिद्ध्या न च भोगकैः ।
न प्रभावेण नो मानैर्नाशामरणजीवितैः ॥३॥ ( ५।८६।१८ )
यस्तु वा भावितात्मापि सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ॥४॥ ( ५।८६।२३)
द्रव्यकालक्रियामन्त्रप्रयोगाणां स्वभावजाः ।
एतास्ताः शक्तयो राम यद्व्योमगमनादिकम् ॥५॥ (५।८६।२७)
सदा स्वभाववशतो द्रव्यकालक्रियाक्रमाः ।
नियतं साधयन्त्याशु प्रयोगं युक्तियोजिताः ॥६॥ (५।८६।२६)
यथोदेति च यस्येच्छा स तया यतते तथा ।
यथाकालं तदाप्नोति ज्ञो वाप्यज्ञतरोऽपि वा ॥७॥ (५।८६।३४)
याः फलावलयो येन संप्राप्ताः सिद्धिनामिकाः ।
तास्तेनाधिगता राम निजात्मप्रयतनद्रुमात् ॥८॥ (५।८६।३७)

[११] जीवन्मुक्तस्य सर्वापद्धानिः :—

वेत्ति नित्यमुदारात्मा त्रैलोक्यमपि यस्तृणम् । (४।३२।३७)
तं त्यजन्त्यापदः सर्वाः सर्पा इव जरत्त्वचम् ॥१॥ (४।३२।३८)

परिस्फुरति यस्यान्तर्नित्यं सत्त्वचमत्कृतिः । (४।३२।३८)
ब्राह्ममण्डमिवाखण्डं लोकेशाः पालयन्ति तम् ॥२॥ (४।३२।३९)
न किञ्चिद्येन सम्प्राप्तं तेनेदं परमामृतम् ।
सम्प्राप्यान्तः सपूर्णेन सर्वं प्राप्तमखण्डितम् ॥३॥ (५।३४।७६)

[ १२ ] जीवितं हि जीवन्मुक्तस्य शोभते :—

यस्य नोत्क्रामति मतिः स्वात्मतत्त्वावलोकनात् ।
यथार्थदर्शिनो ज्ञस्य जीवितं तस्य शोभते ॥१॥ (५।३९।४६)
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभावेषु जीवितं तस्य राजते ॥२॥ (५।३९।४७)
योऽन्तःशीतलया बुद्धया रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥३॥ (५।३९।४८)
येन सम्यक्परिज्ञाय हेयोपादेयमुज्झता ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥४॥(५।३९।४९)
अवस्तुसदृशे वस्तुन्यसक्तं कलनामले ।
येन लीनं कृतं चेतो जीवितं तस्य शोभते ॥५॥ (५।३९।५०)
सत्यां दृष्टिमवष्टभ्य लीलयेयं जगत्क्रिया ।
क्रियतेऽनासनं येन जीवितं तस्य राजते ॥६॥ ( ५।३९।५१ )
नान्तस्तुष्यति नोद्वेगमेति यो विहरन्नपि ।
हेयोपादेयसंप्राप्तौ जीवितं तस्य शोभते ॥७॥ ( ५।३९।५२ )
शुद्धपक्षस्य शुद्धस्य [illegible]ौघः सरसो यथा ।

यस्माद्गुणौघो निर्याति जीवितं तस्य शोभते॥८॥(५।३९।५३)
यस्मिन्श्रुतिपथं प्राप्ते दृष्टे स्मृतिमुपागते ।
आनन्दं यान्ति भूतानि जीवितं तस्य शोभते ॥९॥ (५।३९।५४)
यद्यत्संसारजालेऽस्मिन्क्रियते कर्म भूमिप ।
तत्समाहितचित्तस्य सुखायान्यस्य नानघ ॥१०॥ ( ५।६२।२ )
पूर्वं धिया विचार्यंते भोगा भोगिभयप्रदाः ।
भोक्तव्याश्चरमं राम गरुडेनेव पन्नगाः ॥११॥ ( ५।७६।१८ )
विचार्य तत्त्वमालोक्य सेव्यन्ते या विभूतयः ।
ता उदर्कोदया जन्तोः शेषा दुःखाय केवलम्॥१२॥ (५।७६।१९)
असंसङ्गेन भोगानां सर्वा राम विभूतयः ।
परं विस्तारमायान्ति प्रावृषीव महापगाः ॥१३॥ ( ५।६८।४९ )
बलं बुद्धिश्च तेजश्च दृष्टतत्त्वस्य वर्धते ।
सवसन्तस्य वृक्षस्य सौन्दर्याद्या गुणा इव॥१४॥ (५।७६।२०)

## [ १३ ] प्रबुद्धस्य देहपातानन्तरा गतिः :—

जीवन्मुक्तपदं त्यक्त्वा देहे कालवशीकृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ १ ॥ ( ३।९।१४ )
विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥२॥ ( ३।९।१५ )
सूर्यो भूत्वा प्रतपति विष्णुः पाति जगत्त्रयम् ।
रुद्रः सर्वान्संहरति सर्गान्सृजति पद्मजः ॥ ३ ॥ ( ३।९।१६ )
खं भूत्वा पवनस्कन्धं धत्ते सर्षिसुरासुरम् ।

कुलाचलगतो भूत्वा लोकपालपुरास्पदः ॥४॥ ( ३।९।१७ )
भूमिर्भूत्वा बिभर्तीमां लोकस्थितिमखण्डिताम् ।
तृणगुल्मलता भूत्वा ददाति फलसंततिम् ॥५॥ ( ३।९।१८ )
बिभ्रज्जलानलाकारं ज्वलति द्रवति द्रुतम् ।
चन्द्रोऽमृतं प्रस्रवति मृतं हलाहलं विषम् ॥६॥ (३।९।१९)
तेजः प्रकटयत्याशास्तनोत्यान्धं तमो भवत् ।
शून्यं सद्व्योमतामेति गिरिः सन् रोधयत्यलम् ॥७॥ (३।९।२०)
करोति जङ्गमं चित्तः स्थावरं स्थावराकृतिः ।
भूत्वार्णवो वलयति भूस्त्रियं वलयो यथा ॥८॥ ( ३।९।२१ )
परमार्कवपुर्भूत्वा प्रकाशान्तं विसारयन् ।
त्रिजगत्त्रसरेणत्रोघं शान्तमेवावतिष्ठते ॥९॥ ( ३।९।२२ )
यत्किञ्चिदिदमाभाति भातं भानमुपैष्यति ।
कालत्रयगतं दृश्यं तदसौ सर्वमेव च ॥१०॥ ( ३।९।२३ )
मुक्तिरेषोच्यते राम ब्रह्मैतत्समुदाहृतम् ।
निर्वाणमेतत्कथितं पूर्णात्पूर्णतराकृति ॥११॥ ( ३।९।२५ )



इति श्रीभीखनलाल आत्रेय, एम. ए., डी. लिट्. इति नाम्ना
काशीस्थश्रीहिन्दूविश्वविद्यालये दर्शनाध्यापकेन संकलितः
श्रीवासिष्ठदर्शनाख्यः श्रीयोगवासिष्ठसारः ।

# विषयानुक्रमणिका



## अ


| विषयः | | | | पृ० |
|---|---|---|---|---|
| अकारणत्वाज्जगतो विभ्रमत्त्वम् | | ... | ... | १७५ |
| अजादवादः | ... | ... | ... | १६९, १७६ |
| अज्ञानम् | ... | ... | ... | १८५ |
| अणुत्वप्राप्तये देहस्य विलापनम् | | ... | ... | ९८ |
| अणुत्वप्राप्तौ ज्ञानयुक्तिः | | ... | ... | ९३ |
| अत्यन्ततामसी | ... | ... | ... | ७१ |
| अद्वैतम् | ... | ... | ... | ३० |
| अधमसत्त्वा | ... | ... | ... | ७१ |
| अधिकारः | ... | ... | ... | ५ |
| अधिकारिगुणप्रतिपादनम् | | ... | ... | ५ |
| अधिकारिलक्षणम् | ... | ... | ... | ५ |
| अप्रबुद्धबोधायैव भेदकल्पना | | ... | ... | १६९ |
| अनामयं जीवितम् | ... | ... | ... | ८६ |
| अभावभावना | ... | ... | ... | २०७ |
| अभ्यासप्रशंसा | ... | ... | ... | ८० |
| अभ्युदयस्य निःसारत्वम् | | ... | ... | १८१ |
| अयं सिद्धान्तोऽनधिकारिणे न वक्तव्यः | | | = | १७८ |
| अविचारवन्तं कोपि देवो न ज्ञानं दातुं समर्थः | | | ... | १९२ |
| अविद्ययैवाविद्यानाशः | | ... | ... | २०१ |

| विषयः | पृ० |
|---|---|
| अविद्या ... ... ... | ५८, १६२ |
| अविद्यानाशः ... ... ... | २०१ |
| अविद्याया असत्ता ... ... ... | १६३ |
| अविद्याया न पुनर्निवर्त्तनम् ... ... | २५८ |
| अविद्याया वोधाद्विलयः ... ... ... | १६६ |
| अविद्याविलये नाशशब्दो न युज्यते ... ... | १६७ |
| असङ्गः ... ... ... | २४२ |
| असङ्गः श्रेष्ठः ... ... ... | २४२ |
| असङ्गः सामान्यः ... ... ... | २४२ |
| असङ्गाभ्यासः ... ... ... | २३१ |
| अस्थिरता ... ... ... | १४ |
| अहङ्कारः ... ... ... | ५७ |
| अहङ्कारताऽऽदानं जीवस्य ... ... | ६० |
| अहङ्कारोन्मूलनम् ... ... ... | २२७ |
| अहङ्कारोन्मूलनविधिः ... ... ... | २२८ |
| अहंभावचतुष्टयम् ... ... ... | १०५ |
| अहंभावना ... ... ... | १८५ |
| अहंभावे गलिते सर्वदोषापगमः ... ... | २३० |
| अहं सर्वमिदं विश्वम् ... ... ... | १०७ |


## आ


| विषयः | पृ० |
|---|---|
| आऽऽत्मज्ञानात्संसरणम् ... ... | ११६ |
| आकाशत्रयम् ... ... ... | ५१ |
| आजीवनं कर्मत्यागो न युज्यते ... ... | १६७ |
| आतिवाहिकतानुभवः ... ... ... | ६२ |
| आतिवाहिकदेहः ... ... ... | ५६ |

| विषयः | पृ० |
|---|---|
| आत्मख्यातिवादः ... ... ... | ४२ |
| आत्मज्ञानम् ... ... ... | १६ |
| आत्मज्ञानमेव विश्रान्तिसाधनम् ... ... | १६ |
| आत्मज्ञाने प्रमाणम् ... ... ... | २८ |
| आत्मज्ञानं स्वपौरुषविचाराभ्यामेव जायते ... | १६६ |
| आत्मदेवपूजनविधिः ... ... ... | १६४ |
| आत्मदेवेतरो देवो नाराधनीयः ... ... | १६१ |
| आत्मनः पुर्यष्टके स्फुरणम् ... ... | १०७ |
| आत्मनः सन्निधिमात्रेण कर्तृता ... ... | १५१ |
| आत्मविस्मरणम् ... ... ... | १८४ |
| आत्मशरीरयोः सम्बन्धाभावः ... ... | १०७ |
| आत्मस्वरूपे स्थितिः ... ... ... | २५६ |
| आत्मा ... ... ... | १०२ |
| आत्मा तु न जायते न म्रियते वा ... ... | ११६ |
| आत्मानन्दः ... ... ... | १७६ |
| आत्मानुभवोदयलक्षणानि ... ... | २५५ |
| आत्मानुभवः ... ... ... | २५५ |
| आत्मानुभूतेरनुपमेयत्वम् ... ... | २५६ |
| आत्मा शुद्धे चित्ते प्रतिबिम्बति ... ... | ८६ |
| आत्मेत्यपि ब्रह्मणः संज्ञा कल्पिता ... ... | १३७ |
| आधिक्षयेण व्याधयोऽपि क्षीयन्ते ... ... | ८५ |
| आधिभौतिकत्वम् ... ... ... | ३५ |
| आधिभौतिकभावनायाः प्रतिबन्धकत्वम् ... | ६२ |
| आधिव्याधिस्वरूपम् ... ... ... | ८४ |
| आनन्दमयं जीवनम् ... ... ... | ८८ |

| विषयः | पृ० |
|---|---|
| आनन्दः ... ... ... | १७६ |
| आयुर्निन्दा ... ... ... | ८ |
| आयुषो न्यूनाधिकत्वकारणम् ... ... | १२० |
| आर्यलक्षणम् ... ... ... | १५४ |
| आलस्यनिन्दा ... ... ... | २५ |
| **इ** | |
| इदंप्रथमता ... ... ... | ७० |
| इन्द्रियनिग्रहविधिः ... ... ... | २२३ |
| इन्द्रियम् ... ... ... | ५६ |
| इयत्ता ... ... ... | १८४ |
| **ई** | |
| ईश्वरः सर्वस्यान्तरेव वर्तते ... ... | १६३ |
| **उ** | |
| उत्पत्तिलययोः सर्वत्रैकरूपता ... ... | ७४ |
| **ए** | |
| एकतत्त्वघनाभ्यासः ... ... ... | २०६ |
| एकमनेकं वेति वक्तुमशक्यं ब्रह्म ... ... | १३४ |
| एकस्मिन्नेव ब्रह्मणि नानारूपसर्गताशक्तिः ... | १५० |
| **ऐ** | |
| ऐच्छिकनानाशरीरकल्पना ... ... | ६८ |
| **क** | |
| कथमनामयं जीवितं स्यात् ... ... | ८६ |
| कथं सर्वातीतोऽहम् ... ... ... | १०५ |
| कदा मोक्षोऽनुभूयते ... ... ... | १८६ |

| विषयः | पृ० |
|---|---|
| कर्म ... ... ... | ५७ |
| कर्मत्याग आजीवनं न युज्यते ... ... | १६७ |
| कर्मत्यागोऽपि न मोक्षे कारणम् ... ... | १६७ |
| कर्मपाशोच्छेदः ... ... ... | २४५ |
| कर्मफलनियमः ... ... ... | २४५ |
| कर्मबन्धनान्मुक्तेर्विधिः ... ... ... | २४८ |
| कर्मयोगः ... ... ... | २५१ |
| कर्मस्वरूपम् ... ... ... | २४५ |
| कर्माभावः ... ... ... | २३४ |
| कल्पना ... ... ... | ५७ |
| कल्पनावादः ... ... ... | २६ |
| कल्पान्ते सर्वसंक्षयः ... ... ... | ४७ |
| कालसाम्राज्यम् ... ... ... | १२ |
| कालः ... ... ... | ३२ |
| कुण्डलिनी ... ... ... | ६४ |
| कुण्डलिनीयोगसाध्याः सिद्धयः ... ... | ६४,६६ |
| केवलजागराः ... ... ... | ६६ |
| केवलीभावः ... ... ... | २०८ |
| कोऽपि देवोऽविचारवन्तं ज्ञानं दातुं न समर्थः ... | १६२ |
| क्षीणजागराः ... ... ... | ७० |

ग

| | |
|---|---|
| गुणपीवरी ... ... ... | ७० |
| ग्रन्थमहात्म्यम ... ... ... | २ |
| ग्रन्थशैली ... ... ... | १ |

विषयः | पृ०

घ

घनजागराः ... ... ... ७०

च

चतुर्थी भूमिका ... ... ... २४३
चित्तकल्पितः प्राणमनसोः सम्बन्धः ... ... २०६
चित्तचाञ्चल्यम् ... ... ... ६
चित्तम् ... ... ... ५७
चित्तनाशानन्दः ... ... ... २३७
चित्तमविद्या ... ... ... १६३
चित्तशुद्धिः ... ... ... २००
चित्तस्य जगत्कल्पनम् ... ... ... ७६
चित्तस्य संसृतिसामर्थ्यम् ... ... ७५
चित्तस्य स्वभाव एव जगद्भासनम्... ... १५०
चित्तानुरूपा गतिः ... ... ... ८२
चित्तायत्ते सुखदुःखे ... ... ... ८२
चित्ते संस्कृते सति जीवनमानन्दमयं भवति ... ८८
चित्तोऽहमिति ... ... ... १०५
चित्तं जगन्नाभिः ... ... ... ६०
चित्स्वभाव एव जगद्भासनम् ... ... १५०
चिरजागराः ... ... ... ६६
चेतसः पीनतावाप्तिः ... ... ... २१८
चेत्यभावनास्वरूपो ब्रह्मणः स्पन्दः ... ... १२६

विषयः पृ०

## ज


जगत् ... ... ... ४३
जगत्कर्ता ब्रह्मा ... ... ... १२२
जगत्कर्तुर्निर्हेतुकोद्भवः ... ... ... १२६
जगतोऽजातत्वम् ... ... ... १७६
जगतो ब्राह्मणस्तादात्म्यम् ... ... १५४
जगतो भ्रान्तिमात्रत्वम् ... ... ... १५६
जगतो विभ्रमत्वम् ... ... ... १७५
जगतः सदसन्मयत्वम् ... ... ... १५८
जगतः स्वप्नरूपत्वम् ... ... ... ३८
जगदात्मनि लीयते ... ... ... १६८
जगदुत्पत्तिवर्णनम् ... ... ... ४८
जगन्नाभिः चित्तम् ... ... ... ६०
जगन्नामानि ... ... ... ४३
जगद्ब्रह्मबृंहणम् ... ... ... १४६
जगद्भ्रमक्षयः ... ... ... १६७
जगद्भासनं ब्रह्मणः ... ... ... १५०
जगद्विना नेशस्य संस्थितिः ... ... १५५
जगद्वैचित्र्यम् ... ... ... ४६
जगन्मिथ्यात्वम् ... ... ... १५८,१६२
जन्तोर्मरणावस्था ... ... ... ११०
जराजुगुप्सा ... ... ... ११
जाग्रत् ... ... ... ६७, १०२
जाग्रत्स्वप्नयोरभेदः ... ... ... ३७

| विषयः | पृ० |
|---|---|
| जाग्रत्स्वप्नसुषुप्तयः ... ... ... | १०२ |
| जाग्रत्स्वप्नाः ... ... ... | ७० |
| जाग्रत्स्वप्नः ... ... ... | ६७ |
| जिज्ञासातीव्रत्वम् ... ... ... | १६ |
| जीवजातयः ... ... ... | ७० |
| जीवन्मुक्तचित्तम् ... ... ... | २७३ |
| जीवन्मुक्तलक्षणानि ... ... ... | २६१ |
| जीवन्मुक्तस्य किमपि हेयोपादेयं नास्ति ... | २६६ |
| जीवन्मुक्तस्य जीवितं शोभते ... ... | २७५ |
| जीवन्मुक्तस्य देहपातानन्तरा गतिः ... ... | २७६ |
| जीवन्मुक्तस्य शरीरनगरीराज्यम् ... ... | २७० |
| जीवन्मुक्तस्य सर्वापद्धानिः ... ... | २७४ |
| जीवन्मुक्तानां यथाप्राप्तास्वस्थासु स्थितिः ... | २७२ |
| जीवन्मुक्तिः ... ... ... | २६१ |
| जीवन्मुक्तो महाकर्ता ... ... ... | २६७ |
| जीवन्मुक्तो महाभोक्ता ... ... ... | २६९ |
| जीवन्मुक्तो व्यवहार्यपि समाधिस्थः ... ... | २६८ |
| जीवमोहः ... ... ... | ६६ |
| जीवमोहः सप्तविधः ... ... ... | ६६ |
| जीवस्य देहभावादानम् ... ... ... | ६१ |
| जीवस्य मिथ्यात्वम् ... ... ... | १६२ |
| जीवस्य सर्वसंपादनत्वशक्तिः ... ... | ७६ |
| जीवस्याहंकारताऽऽदानम् ... ... | ६० |
| जीवानामसंख्येयत्वम् ... ... ... | ६६ |
| जीवानां ब्रह्मण उद्भवः ... ... ... | ७३ |

| विषयः | | | | पृ० |
|---|---|---|---|---|
| जीवाः | ... | ... | ... | ६८ |
| जीवाः सप्तविधाः | ... | ... | ... | ६८ |
| जीवितं हि जीवन्मुक्तस्य शोभते | | ... | ... | २७५ |
| जीवेच्छाकल्पितं निजं विश्वम् | | ... | ... | ८३ |
| जीवं जीवं प्रति विश्वस्वप्नः | | ... | ... | ३६ |
| जीवः | ... | ... | ... | ५६ |

ज्ञ

| | | | | |
|---|---|---|---|---|
| ज्ञानप्राप्तौ शास्त्रस्योपयोगः | | ... | ... | २०१ |
| ज्ञानबन्धुः | ... | ... | ... | २०३ |
| ज्ञानभूमयः | ... | ... | ... | २३८ |
| ज्ञानम् | ... | ... | ... | १८ |
| ज्ञानामेव दुःखनिवृत्त्युपायः | | ... | ... | १८ |
| ज्ञानमेवापायो मोक्षस्य | ... | ... | ... | १६० |
| ज्ञानयुक्तिः | ... | ... | ... | २२० |
| ज्ञानसिद्धिः | ... | ... | ... | २०३ |
| ज्ञानसिद्धिर्नाभ्यासेन विना | | ... | ... | २०४ |
| ज्ञानसिद्धिर्व्योमगमनादिसिद्धेर्भिन्ना | | | ... | २७४ |
| ज्ञानादेवेश्वरप्राप्तिः | ... | ... | ... | १६३ |
| ज्ञानाधिकारः | ... | ... | ... | ५ |
| ज्ञानिनां देवार्चनम् | ... | ... | ... | १६५ |
| ज्ञानी | ... | ... | ... | २०३ |
| ज्ञेयो वासनात्यागः | ... | ... | ... | २२६ |

त

| | | | | |
|---|---|---|---|---|
| तत्त्वज्ञानम् | ... | ... | ... | २८ |
| तत्त्वज्ञानसिद्धिर्व्योमगमनादिसिद्धेर्भिन्ना | | | ... | २७४ |

| विषयः | पृ० |
|---|---|
| तत्त्वज्ञानावतरणम् ... ... ... | १६ |
| तदस्ति नास्ति चेति वक्तुं न युज्यते ... | १३५ |
| तमोराजसी ... ... ... | ७३ |
| तमःप्रकाशाभ्यां परं ब्रह्म ... ... | १३६ |
| तादात्म्यम् ... ... ... | १५३ |
| तामसतामसी ... ... ... | ७३ |
| तामससत्त्वा ... ... ... | ७२ |
| तामसी ... ... ... | ७ |
| तिमिरम् ... ... ... | ८६ |
| तुर्यावस्था ... ... ... | १०४ |
| तृतीया भूमिका ... ... ... | २४१ |
| तृतीयं मतम् ( योगभूमिकासु ) ... ... | २४० |
| तृप्तिः परमा ... ... ... | २५६ |
| तृष्णानिन्दा ... ... ... | २२४ |
| तृष्णादाहः ... ... ... | ६ |
| त्यागफलम् ... ... ... | २३६ |
| त्रिजगच्चिदन्तरस्ति ... ... ... | १४८ |
| त्रिजगत्स्थितेः कारणं ब्रह्म ... | १२८ |

द

| | |
|---|---|
| दर्शनान्तरैः सह मतभेदः ... ... | ६० |
| दुःखनिवृत्त्युपायः ... ... ... | १७, १८ |
| दुःखस्य कारणम् ... ... ... | १७ |
| दुःखहेतुनिरूपणम् ... ... ... | १८१ |
| दृष्टान्तोपयोगिता ... ... ... | २८ |

| विषयः | | | | पृ० |
|---|---|---|---|---|
| दृश्यस्य बोधरूपत्वम् | ... | ... | ... | २६ |
| देवार्चनम् | ... | ... | ... | १६५ |
| देशः | ... | ... | ... | ३२ |
| देहस्य विलापनम् | ... | ... | ... | ६८ |
| देहस्यारम्यत्वम् | ... | ... | ... | ६ |
| देहोऽहमिति | ... | ... | ... | १०५ |
| देहः | ... | ... | ... | ३५, ६० |
| दैवनिराकरणम् | ... | ... | ... | २२ |
| दैवशब्दार्थः | ... | ... | ... | २२ |
| द्रव्यम् | ... | ... | ... | ३३ |
| द्रष्टुर्दृश्यबीजत्वम् | ... | ... | ... | ३६ |
| द्रष्टृदृश्ययोरनन्यत्वम् | ... | ... | ... | ३५ |
| द्वितीया भूमिका | ... | ... | ... | २४१ |
| द्वितीयं मतम् ( योगभूमिकासु ) | | ... | ... | २३६ |
| द्विविधो मोक्षः | ... | ... | ... | १८७ |
| द्विविधो वासनात्यागः | ... | ... | ... | २२५ |

ध

| | | | | |
|---|---|---|---|---|
| ध्येयो वासनात्यागः | ... | ... | ... | २२५ |

न

| | | | |
|---|---|---|---|
| न जडं नापि चेतनं ब्रह्म .... | ... | ... | १३७ |
| न ज्ञानान्तर उपायो मोक्षस्य | ... | ... | १६० |
| न ब्रह्म स्वस्मिन्नानात्वसंस्पृष्टम् | ... | ... | १५१ |
| न सन्नासज्जगत् ... | ... | ... | १५८ |
| नानारूपसर्गताशक्तिर्ब्रह्मणः | ... | ... | १५० |
| नाभ्यासेन विना ज्ञानसिद्धिः | ... | ... | २०४ |

